श्रीदेव्युवाच

भगवन् सर्वमन्त्राश्च भवता मे प्रकाशिताः।
चतुष्पष्टिश्च[1] तन्त्राणि मातॄणामुत्तमानि[2] तु[3] ॥ १३ ॥

---

इत्थ महानन्दसारा पूर्णाहन्तामयी वाच विमृश्यानन्दोदधिनिमग्न विमर्शैकसार प्रकाशैकमय[4] महादेव स्वाभिन्ना[5] भगवती सविदाख्या विमर्शशक्तिर्मोक्षलक्ष्म्युपरिलिष्टा[6] द्योतनादिसतत्त्वा[7] श्रीदेव्युवाच आममर्श। भगवन्नित्यादिसार्धैकादशश्लोकेन [1]पूर्वोपदिष्ट[8]मन्त्रसामान्यमुपदिष्टचतुष्पष्टितन्त्रानुवादश्च[9] क्रियते। हे भगवन्! चिन्मयस्वात्मन्! सर्वमन्त्राः सर्वे मन्त्रा[10] मननत्राण[11]धर्माणश्चिन्माहात्म्यावमर्शका., अथवा[12] [2]गुप्तार्थभाज पिण्डबीजात्मान पुरूप-

---

स्वशक्तिसहितो देवश्चतुर्युगविभागश।
पूर्वपश्चिमभेदेन युगपत् स्वाधिकारकृत्[13] ॥ इति।

अस्याश्चतुराम्नायस्वरूपविवरण[14] चक्रोद्धारे[3] वह्निभागप्रकरणे प्रपञ्चयिष्याम[15] ॥ १२ ॥

श्रीदेव्युवाचेत्यारभ्य जातक्षोभ प्रजामत इत्यन्ता श्लोका स्पष्टार्था। पुनरपि[16] सिंहावलोकनन्यायेन विषमपदव्याख्या[17] लिख्यते। सर्वे मन्त्रा आणवशाक्तशाम्भवोपायसम्बन्धिन। चतुष्पष्टिश्च तन्त्राणीति। ब्रह्माण्याद्यशभूताना मातृणा चतुष्पष्टिपूजा-

---

१. स्तु–चाक. ल.। २. मातृकामण्डलानि–सघ.। ३. च–चाग. से ल. सघ.। ४. शमय–स. ग.। ५. स्वाभिन्ना च–क, स्वाभिन्नाभिन्ना–च.। ६. लक्ष्म्या प्रश्लिष्टा–ख.। ७. मानादितत्त्वा–क.। ८. दिष्ट–क, दिष्ट तदनु–ख.। ९. 'च' नास्ति–क. ख.। १०. 'सर्वे मन्त्रा' नास्ति–क. ख.। ११. 'मननत्राण' नास्ति–क.। १२. 'अथवा ताश्च विद्या' नास्ति–ख.। १३. सोऽधि–ख. घ. ङ. च ज.। १४. विचारणा–छ.। १५. 'प्रपञ्च' इत्यादि ३१ सूत्रस्थ 'मध्यचक्र' इत्यन्त पाठस्त्रुटित –ज। १६. तत्र–ख. ङ.। १७. व्याख्यान–थ.।

1 पूर्वोपदिष्टेत्यादि। पूर्वोपदिष्टम न्त्रसामान्यस्य उपदिष्टचतुष्पष्टितन्त्राणां चानुवाद क्रियत इति यावत्।

2 गुप्तार्थभाज इति। प्रपञ्चसारविवरणव्याख्यायां प्रयोगक्रमदीपिकायाम् (पृ० ५६६) 'उक्तार्थभाज' इत्येवमुद्धृत पाठोऽशुद्ध।

3 चक्रोद्धारावसरे 'तत्र मूर्त्ति' (१।४२) इत्यादिसूत्रव्याख्यानावसरे द्रष्टव्यमिदम्।

महामाया शम्बरं च योगिनी जालशम्बरम् ।
तत्त्वशम्बरकं नाथं[2] भैरवाष्टकमेव च ॥ १४ ॥
बहुरूपाष्टकं ज्ञानं[3] यामलाष्टकमेव च ।
चन्द्रज्ञानं वासुकिं[4] च महासंमोहनं तथा ॥ १५ ॥
महोच्छुष्मं[5] महादेव[6] वातुलं वातुलोत्तरम्[7] ।
हृद्भेदं मातृभेदं[8] च गुह्यतन्त्रं च कामिकम् ॥ १६ ॥

वाच्याध्यासिताश्च मन्त्राः, चकारेण विद्याः समुच्चीयन्ते । संवेद्यमानस्फुटार्थ-रूपा मालामन्त्राः स्त्रीरूपवाच्याध्यासिताश्च विद्याः । भवता प्रकाशवपुषा । मे संविदो विमर्शमय्याः । प्रकाशिता उल्लसिताः[10] । मातॄणां विश्वाधिष्ठातॄणां ब्राह्म्यादिसंविदाम् । उत्तमानि क्रोडीकृताशेषपरमार्थानि[11] ॥ १३ ॥

अथ[12] [1]चतुष्षष्टितन्त्रोद्देशः—महामायेति । एवं[13] चतुष्षष्टितन्त्राणीति । महामायाशम्बरं[14] महामायातन्त्रं शम्बरतन्त्रम् । योगिनीजालशम्बरं[15] योगिनी-शम्बरतन्त्रं जालशम्बरतन्त्रम् । हे नाथ ! नाथ्यमान ! समभिलषणीय ! भैरवाष्टकं बहुरूपाष्टकं यामलाष्टकमिति चतुर्विंशतितन्त्राणि । बहुरूपाष्टकं[16]

मण्डलानि त्वया प्रदर्शितानीत्यर्थः । भैरवाष्टकमिति । असिताङ्गाद्यष्टभैरवाणां पूजा-शास्त्राणि । यामलाष्टकमिति । ब्रह्मयामल-विष्णुयामल[17]-रुद्रयामल-जयद्रथयामल[18]-स्कन्दयामल-उमायामल[19]-लक्ष्मीयामल-गणेशयामलादीन्यष्टावुन्नेयानि । प्रभावसरे

१. पञ्चरत्नं—सघ. । २. देव—वाक. ख. ब. सक. घ., दैव—ऋ. वाग. ल. से. । ३. दैव—वाग. से. ल. । ४. मालिनी—ल. । ५. वामजुष्टं—ऋ. ल., महासूक्ष्मं—सघ. । ६. महादेवं—ल. । ७. वायुलं च नयोत्तरम्—वाक. ख., वाघुलं वाघुलोत्तरम्—सख., वातुलं च लयोत्तरम्—सघ. । ८. तन्त्रभेदं—वाग. से. ल., मातृकाभेदं—सक. । ९. माना—क. ख. । १०. 'उल्लासिताः' नास्ति—ख., उल्लिखिताः—क. । ११. तान्यशे—क., ताशेषपरमपुरुषार्थानि—ख. ग. । १२. तथा च—क. । १३. 'एवं······णीति' नास्ति—ख. । १४. 'महा······जालशम्बरतन्त्रम्' नास्ति—क. । १५. 'योगिनीजालशम्बरतन्त्रम्' इत्येव पाठः—ख. । १६. 'बहु······तन्त्राष्टकम्' नास्ति—क. ख. । १७. 'विष्णुयामल' नास्ति—क. ग. । १८. यामलेत्यादि अष्टा—ख. ह. च. । १९. 'उमायामल' नास्ति—ग. ।

1. चतुष्षष्टितन्त्रनामविमर्शादिकं भास्कररायादिमतभेदप्रदर्शनपुरस्सरमुपोद्घातेऽवलोकनीयम् ।

कलावादं[1] कलासारं तथान्यत् कुब्जिकामतम्[2] ।
मतोत्तरं[3] च वीणाख्यं[4] त्रोतलं[5] त्रोतलोत्तरम् ॥ १७ ॥
पञ्चामृतं रूपभेदं भूतोड्डामर[6]मेव च ।
कुलसारं कुलोड्डीशं कुलचूडामणिं प्रभो[7] ॥ १८ ॥
सर्व[8]ज्ञानोत्तरं चैव[9] महाकालीमतं तथा ।
महा[10]लक्ष्मीमतं देवि[11] सिद्धयोगे[12]श्वरीमतम् ॥ १९ ॥
कुरु[13]पिकामतं देव रूपि[14]कामतमेव च ।
सर्ववीरमतं देवि[15] विमलामतमेव च ॥ २० ॥
अरुणेशं मोहिनी[16]शं विशु[17]द्धेश्वरमेव च ।

शक्तितन्त्राष्टकम् । भूत[18]डामरमिति भूततन्त्र डामरतन्त्रम् । प्रभो ! सर्व[19](भुभ)-वनशील । आ[20]च्छादनस्वरूपस्य प्रक[21]टने च प्र[22]भवनशील । देव ! अशेषप्रमानादि-रूपेण क्री[23]डादिशील । वि[24]शुद्धेश्वरतन्त्रान्तश्च चतुष्षष्टितन्त्रोद्देशः ॥ १३–२० ॥

---

१. कालपाद कालसार–चाक. ख., कालाभेद–सघ., कलापाद–ब. सक. ख. । २. कुब्जिका–ल. । ३. नयोत्तर–चाक. ख., तन्त्रोत्तर–वाग. से., स्योद्भुव–सख., तन्त्रोद्भुव–सल., मायोत्तर–सघ. । ४. वीराख्य–सघ. । ५. श्रोतुल श्रोतुलोत्तरम्–चाक. ख., तोतल तोतलोत्तरम्–ब. सक., तोनल तोतलोद्भवम्–सघ. । ६. एक तथा–ब. । ७. तथा–चाक. ख. ग. से., णिस्तया–ख. ल. सघ. । ८. देव–चाक. ख. ग. से. ब. । ९. पिचु–चाक. ख. ब. मग. घ., रूपि–सक. । १०. 'महालक्ष्मीमतम्' इत्यादिक पङ्क्तिद्वय नास्ति–ल. ख. । ११. चैव–वाग. से. । १२. योगे–मक. ख. । १३. अरु–ब. । १४. कपिला–सघ. । १५. चैव विमलामतमुत्तमम्–वाग. से. ब. सक. । १६. मोदनेश–चाक. ख., मोदिनीश–ल. ख. सघ. । १७. बुद्धे–ल. ख. । इत परम्–"पूर्वपश्चिमदक्ष च उत्तर च निरुत्तरम् । विमल विमलोत्थ (लायं) च देवीमतमन परम् ॥' इत्यधिक श्लोक–ल. ख., वाग. से. सक. ख. घ. पुस्तकेषु चैव श्लोक 'अरुणेश' इत्यत पूर्वं विद्यते, उत्तरार्धश्च "तन्त्र वैशेषिक ज्ञानं वीरावलि तथापरम्" इत्येव दृश्यते । १८. भूतोड्डामरमिति भूतोड्डामरतन्त्रम्–ख. । १९. 'सर्व-भुवनशील' नास्ति–ब. ग. । २०. 'आच्छा -प्रभवनशील' नास्ति–ख. । २१. प्रकपने–ब. । २२. प्रभय–ब. । २३. चीडाशील–ख. ग. । २४. विश्वम्भर–ग. ग. ।

**एवमेतानि शास्त्राणि तथान्यान्यपि[1] कोटिशः ॥ २१ ॥**
**भवतोक्तानि मे[2] देव सर्वज्ञानमयानि च ।**
**नित्याः[4] षोडश देवेश सूचिता न प्रकाशिताः ॥ २२ ॥**

एवमेतानीति । चिन्मयेन[5] भवता । प्राधान्येन[6] ज्ञानयोगक्रियाचर्याप्रतिपादनपराणि चतुष्षष्टिशास्त्राण्युपदिष्टानि[7] । तथान्यान्यपीति । एकस्मिन् शास्त्रे[9] प्राधान्येनोपदिश्यमाने प्रसङ्गागतानि बहूनि शास्त्राण्यस्मदर्थं[10] प्रकाशितानीत्यर्थः[8] । कोटिश इति[11] । अयमभिप्रायः—एकमपि ज्ञानं भवतानुग्राह्यविषये न गोपितमिति । सर्वज्ञानमयानि समस्तज्ञानभाजनानि ॥ २१ ॥

नित्याः षोडशेति । हे देवेश ! चिन्मरीचिचक्रेश्वर । सूचिताः तत्तच्छास्त्रोपदेशसमये प्रसङ्गादनुग्रहैकपरतया[12]ऽप्रकृतत्वादप्राधान्येन प्रकाशिताः ।

---

सूच्यमानस्य[13] ग्रन्थस्यायं भावः—अस्मिन् श्रीवामकेश्वरे शास्त्रे श्रुत[14]सकलशास्त्रार्थावधारणनिपुणतया[15][16] स्वस्याधिकारसम्पत्ति[17] द्योतयितुं शास्त्रानुवादः कृतो देव्याः । अथवा सर्वज्ञानमयान्येतानि[18] शास्त्राणि मयाधिकृतान्यपि तानि मे[19] मनसि सौमनस्यापादनाय नालमित्यतस्तामेव विद्यां महात्रिपुरसुन्दरीं[20] सकलसौमनस्यसम्पादिनीं[21] सर्वकामप्रदां संवेदितुमिच्छामि[22] । अधिगतसकलविद्याकारणत्वादित्यर्थः । अथवा श्रीमहात्रिपुरसुन्दरीमाहात्म्यप्रकटनायाधिगतशास्त्रानुवादः[23] कृतः[24] ॥ १३-२१ ॥

नित्याः षोडशेत्यारभ्य परिपूर्णा समन्तत इत्यन्तस्य लोपामुद्रामते त्वयं भावः—तत्रैका नित्या प्रधाना षोडशी महात्रिपुरसुन्दरी परिपूर्णा, अन्यास्तु कलारूपाः प्रति-

---

१. तन्त्राणि—ऋक. । २. देवेश—सक. घ. । ३. नोत्तमानि—सख. । ४. विद्या.—खाक. ख. । ५. मन्नाथेन—ख. चिन्नाथेन—ग. । ६. 'प्राधान्येन' नास्ति—क. । ७. तन्त्रा—क. । ८. नीति—ख. । ९. तन्त्रे—क. । १०. तन्त्रा—क. । ११. इत्यस्याय—ख. ग. । १२. न्तरप्र—ग. । १३. अनूद्यमानस्य—च., सर्वग्रन्थार्थवादस्यायं—क. ग. छ. । १४. 'श्रुत' नास्ति—क. ग. छ. । १५. धतार—ध. । १६. निरूपणतया—ग. । १७. स्वाधि—च. घ. ङ. च. । १८. अत्रैव घ. मातृकाऽवसिता । १९. मम मनसि—क. ग. छ, मन्मनसि—ख. ङ. । २०. 'महा'''अथवा श्री' नास्ति—ग. । २१. दनीं—क. छ. । २२. सवेत्तु—ख. घ., संसेवितु—ङ, सर्वं वेदितुम्—छ. । २३. घटनाया—ख. ङ. । २४. 'कृत.' नास्ति—ग. ।

1. "अन्यान्यपि कुलार्णव-दक्षिणामूर्तिसंहिता-सनत्कुमारसंहिता-परानन्दतन्त्रादीनि" (से.पृ.२५) ।

इदानीं श्रोतुमिच्छामि तासां नामानि शङ्कर ।
एकैकं चक्रपूजां च परिपूर्णां समन्ततः ॥ २३ ॥
अनेकदेवतानाममन्त्रमुद्रागणैः सह ।

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि नित्याषोडशिकार्णवम् ॥ २४ ॥
न कदाचिन्मयाख्यातं सर्वतन्त्रेषु गोपितम् ।

इदानीमिति । तासां नित्यानाम् । हे शङ्कर ! शम् उपशान्ताशेषोपतापपरमानन्दाद्वयस्वचैतन्यस्फारप्रत्यभिज्ञानस्वरूपमनुग्रह करोति यस्तादृश. । एकैकम् । नामानीति सम्बन्ध । चक्रपूजां च परिपूर्णां समन्तत इति । चक्रपूजा चक्राणा पूजा । समन्तत इत्यङ्गाद्यशेषावरणवाचक. । किमुक्त भवति ? अङ्गाद्यशेषावरणोपेता परिपूर्णा चक्रपूजा चावधारयितुमिच्छामीति । अनेकेति । मन्त्रमुद्राशब्देन ज्ञानक्रिये लिलक्षयिषिते । गणशब्देन तद्गत. प्रसर. । अयमर्थं —प्रतिनित्याकला प्रतिचक्रपूजा मन्त्रगणैर्मुद्रागणैश्च सहानेकासा देवताना नाम श्रोतुमिच्छामीति ॥ २२-२३ ॥

एवं विमर्शेनाविष्ट संविच्चक्रमहास्वामी ईश्वर उवाच । [1]कालभेदकल्पनया भूतत्वेन व्यवहार, वेद्यत्वेन च प्रत्यक्षत्वाभावात् पारोक्ष्येण । अशेषविभूत्याश्रयत्वादीश्वर । पञ्चभि श्लोकैर्नित्याना नामधेयानि कथयति — शृणु देवीत्यादि । शृणु स्फुटमवधारय । प्रवक्ष्यामि प्रकर्षेण वाक्यप्रबन्ध-

---

१. एकैक—ख ग. ल. । २. चक्र—सख. । ३. इत परम्—"कथयस्व प्रसादेन यदि तुष्टोऽसि मे प्रभो" इत्येषा पङ्क्तिरधिका—खाग. से. सख. घ. । ४. महाज्ञान—खाक. ख. ग. । ५. विद्या—खाक. ख. । ६. कोद्भवम्—सख. । ७. 'परिपूर्णा चोपेता' नास्ति—क. । ८. 'अथ' नास्ति—ख. ग. । ९. 'मन्त्रमुद्रा प्रसर' नास्ति—ख. । १०. विवक्ष्येते—क । ११. 'अयमर्थं उवाच' इत्येषोंऽश 'अशेषविभूत्याश्रय' इत्यत पूर्वं दृश्यते—ग. । १२. 'च' नास्ति—क. । १३. 'कालभेद पारोक्ष्येण' नास्ति—ख. । १४. सर्वव्यव—ग. । १५. स्पदत्वा—ख. ग. । १६. चतुर्भि—ग. । १७. स्पष्ट—ख. ।

1 तुलनीयम्—"परामृशि सदा स्वाभासामप्यन्तर्बाह्याक्षागोचरत्वात् परोक्षामिव, पश्यन्त्यादि कालांशस्पर्शात् तु भूतामिव, तत्प्रत्यक्षततत्प्राणाशाशिवारोऽप्यत्वस्यावधिर्दिनमारान्वयाभावा-

**तत्रादौ प्रथमा नित्या महात्रिपुरसुन्दरी ॥ २५ ॥**
**ततः कामेश्वरी नित्या नित्या च भगमालिनी ।**
**नित्यक्लिन्नाभिधा नित्या भेरुण्डा वह्निवासिनी ॥ २६ ॥**

---

पर्यन्तां विमर्शपदवीं नेष्यामि । नित्याषोडशिकार्णवमिति । अर्णवशब्दो दुरवगाहमिदं शास्त्रमिति दर्शयति । न कदाचिन्मयाख्यातमिति । न प्रकृष्टविमर्शपदवीमानीतमित्यर्थः । सर्वतन्त्रेषु गोपितमिति । तत्र तत्र प्रसङ्गागतमपि प्रसक्तविमर्शैकपरतया गोपितं न प्रकटीकृतम् ॥

तत्रेत्यादि । महात्रिपुरसुन्दरी प्रथमा नित्या । इयं सर्वतिथिमयी नित्याऽमृतस्यन्दिनी महाकामकला सर्वपोषणकरी विश्वसुभगाऽक्षया नित्याकला, इतराः सर्वाः पञ्चदश नि(त्याः ? त्या)कलाः प्रतिपदादिकाः कालावच्छेदकर्योऽङ्गनित्याः । महात्रिपुरसुन्दरीत्यस्य शब्दस्यायं साम्प्रदायिको रहस्यार्थः—देशकालाकारैरनियन्त्रितस्वभावत्वान्महत्त्वोपेता त्रित्वावस्थितसमस्तधर्मपूरणी चिदानन्दघनस्वात्मपरमार्था स्पृहणीयतया हृदयहारिणी संविदिति । कामेश्वरीनित्या द्वितीया । भगमालिनीनित्या तृतीया । नित्यक्लिन्नानित्या चतुर्थी । भेरुण्डानित्या पञ्चमी । वह्निवासिनीनित्या

---

१. क्लिन्ना पि हि तथा—वाक. ख. ग. सक. प., पि च तथा—सल. । २. भुमुण्डा—वग. । ३. विाम्य—ब. सल. । ४. 'इति' नास्ति—क. ग. । ५. तत्र च—ख., 'तत्र' नास्ति—ग. । ६. 'प्रथमा' नास्ति—क. । ७. 'नित्या' नास्ति—क. । ८. 'पोष' इत्येव—ख. ग. । ९. कोऽत्र—ग. । १०. हरिणी—क. । ११. मार्थ—क., मार्थोप—ख. । १२. पोया—क. ग. । १३. 'नित्या' नास्ति—ग. । १४. 'स्यात्' अधिकः—ख. । १५. 'नित्या' नास्ति—ग. । १६. 'स्मृता' अधिकः—ग. ।

यतनौगिव मायडावेष्टुमामृजति" ( पृ. २ ) इति विज्ञानभैरवोद्योतवचनेन, "उपायैर्न शिवुतमपुरर्थवचनम् । भूतन्वं च वक्तव्यस्य सदाननत्वात्, अनद्यतनत्वमकालकलितत्वात्, परोक्षत्वमतीन्द्रियगोचरत्वात्" ( पृ० २ ) इति योगिनीहृदयदीपिकावचनेन च । एवमेव गितुबन्धेऽपि ( पृ० २१ ) दृश्यते ।

महाविद्येश्वरी[1] दूती त्वरिता कुलसुन्दरी।
नित्या नीलपताका च विजया सर्वमङ्गला ॥ २७ ॥
ज्वालामालिनी[2] चित्रा चेत्येवं नित्यास्तु षोडश।

षष्ठी[3]। महाविद्येश्वरीनित्या[4] सप्तमी। दूतीनित्याऽष्टमी। त्वरितानित्या नवमी। कुलसुन्दरीनित्या दशमी। नित्यानित्या एकादशी। नीलपताकानित्या द्वादशी। विजयानित्या त्रयोदशी। सर्वमङ्गलानित्या चतुर्दशी। ज्वालामालिनीनित्या पञ्चदशी। चित्रानित्या षोडशी। एवं नित्यास्तु षोडशेत्यस्यायमर्थः—एवं नित्याषोडशकेनामोपन्यासः[5] कृतः। कामेश्वरीनित्याद्याः प्रतिपदादिका[6] पञ्चदश तिथिनित्याः, महात्रिपुरसुन्दरीनित्या व्यापिका[7] षोडशी पूर्णाऽङ्गी[8] नित्येति। उक्ता नित्यास्तुतिरभियुक्तैः[9]—
नित्याभिः सदृशतरा न सन्ति लोके लक्ष्मीदा जगदनुरञ्जनाश्च[10] मन्त्राः।
तस्मात्ताः शुभमतयो[11] भजन्तु नित्यं[12] जापार्चाहुतिसमुपासनाविशेषैः ॥ इति।
( प्र० सा० १३।८५ )

अन्यत्रापि[13]—

एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः।
तस्य[14] शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः[15] ॥
विमर्शाख्या च सा नित्या[16] पाञ्चविध्यं समागता।

पद्मादिपञ्चदश्यन्तं तिथिक्रमेण स्थिताः। तत्र तत्तत्तिथिनायिकामङ्गनित्यामभ्यर्च्य तदनु महानित्या पूर्णाख्या समर्चनीयेत्यर्थः। तदुक्तं सङ्केतपद्धत्याम्—

१. विद्ये-ग.। २. नित्या चित्रे-से.। ३. षष्ठी स्यात्-ख.। ४. महाविद्येश्वरी तथा। सप्तमी त्वष्टमी दूती नवमी त्वरिता तथा॥ कुलसुन्दरी तु दशमी नित्यैकादशिका स्मृता। द्वादशी नीलपताका विजया तु त्रयोदशी॥ चतुर्दशी सर्वमङ्गला ज्वालामालिनी पञ्चदशी चित्रा नित्या षोडशीति-ख.। ५. कोपन्यासमुखेन क्रमे-क. नामविन्यासनामधेय कृत-ग.। ६. 'का' नास्ति-क.। ७. 'देवी' अधिक-क.। ८. 'पूर्णाङ्गी' नास्ति-क.। ९. नित्यास्तुतिभिरभियुक्तोक्ति-क.। १०. ताश्चिरम-ख. ग.। ११. शुभमतया-क.। १२. नित्या जप्या-भा.। १३. अन्यत्र-ख. ग.। १४. यस्य-चि.। १५. देवी-चि.। १६. 'तत्र' नास्ति-क. ग. छ.। १७. वाङ्-क. ग.।

**शृणु देवि महानित्यामादौ त्रिपुरसुन्दरीम् ॥ २८ ॥**
**यया विज्ञातया देवि जगत्क्षोभः प्रजायते ।**

---

आकाशानिलसप्तार्चिस्सलिलावनिभेदतः ॥
एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ।
विमर्शरूपिणी नित्या षोडशी या प्रकीर्तिता ॥
गता सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ।
सुन्दर्यादिर्महापूर्वं चित्रान्तं च समन्ततः ॥
आगमादेवबोद्धव्यमिह संकेतमात्रतः ।
[1]प्रतिपत्प्रभृतौ देव्यः [2]पौर्णमास्यन्तिकाः क्रमात् ॥
एकैकां पूजयेद्यो हि स सौभाग्यमवाप्नुयात् । इति ।

शृणु देवीति । महानित्यां षोडशी व्यापिकामङ्गिनित्याम् । यया विज्ञातया चमत्कारपदवीं प्रापितया । जगत्क्षोभः । जगतः षट्त्रिंशत्तत्त्व-

---

आकाशानिलसप्तार्चिस्सलिलावनिभेदतः ।
एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ॥
विमर्शरूपिणी नित्या षोडशी परिकीर्तिता ।
गता सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ॥
सुन्दर्यादिर्महापूर्वं विचित्रान्तं समन्ततः ।
प्रतिपत्प्रभृतौ देव्यः पौर्णमास्यन्तिकाः क्रमात् ॥
एकैकां पूजयेद्यो हि स सौभाग्यं परं लभेत् । इति ॥२२-२८॥

---

१. गौरि-वाग. से. ब. । २. संप्र-क. । ३. महत्पूर्वं-क. ख. ग. । ४. विचित्रान्तं-क. ख. । ५. समासत.-ख. । ६. स्वाम-क. ख. ग. । ७. देव-चि. । ८. इति-ख. चि. । ९. तौ-ग. । १०. व्याः-चि. । ११. के-ग., कं प्रिये-चि. । १२. एवैकं-चि. । १३. घस्तु-चि. । १४. त्रिपादेः शिवायमानस्य व्याकुलता-ख. ग. । १५. या प्र-ज. ड. । १६. सा षोडशविभेदैस्तु त्रिपुरा-ख. ड. । १७. तौ-ग. ख. छ., तीर्दें-ड. । १८. पूर्ण-ख. ड. । १९. स्वफलं-ख. । २०. इतः परम्-'कुलागमान्यशास्त्रेषु यथा' इत्यधिकः पाठ-क. ग., 'कुलागमानि शास्त्राणीत्येवं' इति तु-ट. ।

1. प्रतिपदिति । प्रतिपदं प्रक्रम्य भृता पुष्टाः प्रतिपत्प्रभृताः ।
2. पौर्णेति । पौर्णमासी अन्तिका समीपवर्तिनी यासां ताः पौर्णमास्यन्तिकाः ।

**[1]शक्त्या शक्तिं विनिर्भिद्य भूयो वह्निपुरेण ते[2] ॥ २९ ॥**
**संपुटीकृत्य**

---

समुदायरूपस्य क्षोभ.। अयं भाव—महादेवतायामस्यां हृद्यवस्थिताया[3]-
महन्तासरूढाया देव्यात्मा साधको भवति। देवतादर्शने यथा द्रष्टुर्विकारो
भवति, तद्वत्साधकदर्शनेन जगत इति। [4]अथवा विज्ञातु. फलमाह—जगत.
षट्त्रिंशत्तत्त्वमयस्य स्थूलसूक्ष्मादेर्देहस्य तद्द्वारेण विश्वस्य च क्षोभो विगल-
त्स्वरूपतया वैवश्यम् ॥ २४–२८ ॥

शक्त्या [1]शक्तिमि[5]त्याद्येकादशसूत्रैस्त्रैपुरस्य चक्रराजस्य कर्णिकाप्रस्तार-
क्रमो लिख्यते। शक्त्या शक्तिं विनिर्भिद्य। स्वाभिमुखाग्रत्रिकोणपरम्पराया.
शक्तिसंज्ञात्वम्, विपरीताया वह्निसंज्ञात्वमिति समय.[2]। शक्त्याऽन्यया
शक्तिर्मन्या[6] विनिर्भिद्य भेदिता कृत्वा। अयमर्थ.—प्रथममात्माभिमुखा
स[7]मत्रिरेखा सृष्टिप्रधानामेका शक्ति विधाय पुनर्भूतभागीकृताया विमर्शाख्याया-

---

शक्त्या शक्तिमित्यादि। स्वाभिमुखाग्रत्रिकोणपरम्परायाः शक्तय इति चतुरपाष्टप-
प्रस्तारन्यायेन संकेत. कृतः। तद्विपरीताग्रत्रि[8]कोणपरम्परायां वह्निरिति संकेतः कृ[9][10][11]त.।
शक्त्या शक्ति विनिर्भिद्येति प्रथमां शक्तिं द्वितीयया शक्त्या भेदयेदित्यर्थः। [12]भूयः पुनरपि

---

१. पुरोगते—क. । २. तु—वाक. ख. । ३. हृद्यहन्तापरिरूढाया—ख. ग. ।
४. 'अथवा वैवश्यम्' नास्ति—ख. । ५. मित्येका—क. ख. । ६. माद्या—ख. । ७. 'समत्रिरेखा'
नास्ति—ख. । ८. या—क. ग. छ. । ९. कोणत्रिकोण—ख. घ. । १०. या—क. ग. ।
११. सर्वतन्त्रैरिति—क. ख. ■. छ. । १२. 'भूय ···भेदयेदित्यर्थ' नास्ति—ख. ङ. ।

1. "अथ बिन्दुत्रिकोणवसुकोणानि त्रीणि चक्राण्याह सार्धपादद्वयेन" ( से. पृ. २८ ) ।
2. "सार्धश्लोकाभ्यां श्लोके श्रीचक्रलेखनप्रकारमुपदिशति" ( से. पृ. २७ )। अत्र सेतुबन्धे
"एतद्ब्रह्मगतम्" ( १।४०-४१ ) इत्यादिक. सार्धक. श्लोकोऽपि गृहीत। ऋजुविमर्शिन्यां
तु तस्य पृथग् गणनम्। अत श्लोकसंख्यानिर्देशे उभयोष्टीकयोर्न कश्चन विरोध.।
3 अत्र सेतुबन्धे कश्चन विशेष। प्रकृतोपयोगितया सोऽत्र संगृह्यते। "शक्तिवह्निपुरयोश्च पटिके
पश्चिमरेखे प्रत्येक चापदर्शितसते। ऊर्ध्वाधोरेखे पूर्वपश्चिमसते। प्राञ्चस्तु—शक्तेरूर्ध्वरेखा
पश्चिमरेखा, वह्नेरधोरेखा पूर्वरेखेति व्यवहरन्ति। तत्पूज्यपुत्रयोर्मध्यं प्राचीति मानस्य

स्तस्याः शक्तेः पूर्वतः पाण्र्यंशं परित्यज्य समनन्तरप्राप्तवामांशपश्चिमदेशे दक्षिणोत्तररेखां विधाय तच्छक्तिस्वीकृतमानं द्विधा कृत्वा एकैकेन मानेन रेखाद्वयं बाह्यतो विकृष्य वह्निचंशाग्रस्थितप्रथमशक्त्यग्रप्रदेशाद्बहिः पूर्वपरित्यक्तमानदेशेऽग्रं यथा भवति तथा द्वितीयया शक्त्या प्रथमप्रसृतां शक्तिं विनिर्भिद्येति। भूयो वह्निपुरेण ते संपुटीकृत्य। भूयः पुनः। वह्निपुरेण ऊर्ध्वमुखेन शिवपरमार्थेन संहृतिप्रधानेन प्रकाशाख्येन त्रिकोणेन ते पूर्वप्रसृते शक्ती। संपुटीकृत्य नवयोनिचक्रं यथा संपद्यते तथा कृत्वेत्यर्थः। अयमत्र क्रमः—प्रथमप्रसृतशक्त्यग्रसंश्लेपक्रमेण द्वितीयशक्त्युदरे दक्षिणोत्तरतो रेखां तच्छक्तिसव्यापसव्याश्रिद्वयाग्रावधि विकृष्य प्रसृतशक्तिद्वयसव्यापसव्यपार्श्वमर्मभेदनक्रमेण प्रथमशक्तिपाश्चात्यरेखापार्श्वदेशे पादोनद्वितीयशक्तिप्राग्योनिमाने कोणाग्रं यथा भवति तथा वह्निपुरेण शक्तिद्वयं संपुटीकृत्येति। एवं नवयोनिचक्रं सम्प्रदायविहीनाना सुदुर्लभं गुरुवक्त्रात् संपन्नम्। नवयोनिचक्रनिर्माणक्रमेऽभियुक्तोक्तिः—

---

वह्निपुरेण त्रिकोणेन ते पूर्वप्रसृते शक्ती संपुटीकृत्य संपुटीकरणानुरोधेन भेदयेदित्यर्थः। एवं कृते सति मध्यचक्रविन्यासो भवति। मध्यमचक्रमिदं नवयोनिचक्रं नाम ॥ २९ ॥

---

१. एकैकवामरेखा—क.। २. शात् सार्धपादपूर्व—क.। ३. 'शक्ति···प्रथमप्रसृत' नास्ति—ग.। ४. भवति—ख.। ५. 'अयमत्र क्रमः' नास्ति—ख.। ६. सव्या तद्वया—क.। ७. विस्तृत—ग.। ८. बाह्य—ग.। ९. संपन्ननव—क., समुत्पन्नम्—ख.। १०. 'नव···चक्रम् ॥ इति' नास्ति—ख.। ११. पूर्वकृते—क. ग.। १२. 'सम्पुटीकृत्य' नास्ति—क. ग.। १३. मिति—ख. ड. ज.। १४. कनाम—ख. ड.।

श्रीचक्रेऽपवादस्य ज्ञानार्णवादावुक्तस्याज्ञानादित्युपेक्ष्यम्। अत एव शक्तेः कोणत्रयमीशानिपश्चिमकोणसंज्ञम्, वह्नेस्तु वायुराक्षसपूर्वकोणसंज्ञम्। एकस्या रेखाया उपरि रेखान्तरस्यारोहणं भेदनसंज्ञम्। ईदृशभेदनात्मको रेखाद्वयसंयोगः सन्धिः। तादृश एव रेखात्रयसंयोगो मर्म। सन्धिमर्मणोर्द्वयोरपि ग्रन्थिरिति संज्ञा। शक्तिपश्चिमकोणवह्निपूर्वकोणयोः संपर्केण लेखो डमरुः। पूर्णचन्द्राकारा रेखा वृत्तम्" ( से. पृ. २७ ) इति।

[1]सर्वोर्ध्वां शक्तिं विस्तारयेदधः ।
तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेत् ॥ ३० ॥

[2]वह्नेः पुरद्वितयवासवयोनिमध्यसम्बद्धवह्निवरुणेशसमाश्रिताश्रि ।
देव्यर्चनाय मुनिभिर्विहितं[2] पुरैव लोके[3] सुदुर्लभमिदं नवयोनिचक्रम् ॥ इति ॥२९॥
( प्र० सा० ९।१२ )

[1]सर्वोर्ध्वां शक्तिं विस्तारयेदधः। अयमर्थः—नवयोनिचक्र[4]क्रमेण शक्ति-द्वयं वह्निपुरं त्रिकोणत्रयं भवति। तत्र सर्वत्र मध्ये ऊर्ध्वशक्तेः[5] "शक्त्या शक्तिम्" ( १।२९ ) इत्यत्र द्वितीयानिर्दिष्टशक्ते[6]: पश्चिमरेखया[7] तां दक्षिणो-

---

सर्वोर्ध्वामिति। उद्धृतनवयोनिचक्रविन्यासे ऊर्ध्वस्थिता या शक्तिस्तामधो विस्तार-येत्। चक्रसंपुटीकरणेनैव भेदनं विनैवेत्यर्थः। तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेदित्य-स्यायमर्थः—नवयोनिचक्रविन्यासे स्थितो यो वह्निस्तं दक्षिणोत्तराशाक्रमेण मनाग्

---

१. र्ध्वं–वाक. ख. ग.। २. विहितं मुनिभि –ग.। ३. लोकेऽति–मु.। ४ 'चक्रे' इत्येव–ख. ग.। ५. क्ति –क.। ६. क्ति–क.। ७. या या–क. ख। ८. शक्तिस्तां दक्षिणो-त्तराशाक्रमेण मनाग् विस्तार्य तामधो विस्तारयेत्–ख. ङ.। ९. भेदसन्धिनैवेत्यर्थं –ख.। १०. चक्रे–ग.।

1 "अथा तदंशारलेखनोपायमुपदिशति सर्वोर्ध्वामित्यारभ्य शक्तिमाद्यां विभेदयेदित्य तेनार्धाशीत्य-सार्धद्वयश्लोकेन" ( से. पृ. २८ )।

2 वह्नेरिति। प्रपञ्चसारविवरणव्याख्यायां प्रयोगक्रमदीपिकायामेव श्लोक एवं व्याख्यातः—"अष्टदलपद्मकर्णिकायां पूर्वापरं सूत्रमास्फाल्य तत्पोडशधा शतं भङ्क्त्वा प्रागारभ्य चतुरस्पतद्वादशभागान्तसीमासु दक्षिणोत्तराणि सूत्राण्यास्फालयेत्। तत्र द्वितीयसूत्राग्रद्वयात् पूर्वापरसूत्रपश्चिमाग्रावधि सूत्रद्वयं तृतीयसूत्राग्रद्वयात् तत्पूर्वाग्रावधि च सूत्रद्वयमास्फालयेत्। तदा पुटितं वह्निपुरद्वितयं सम्पद्यते। यत्तु प्रथमं सूत्रं तत्पूर्वदिग्गतत्रिकोणमध्यगतमेव भवति। तद्वासवयोनिसंबद्धेत्युक्तम्। पुनस्तदग्रद्वयात् पूर्वापरसूत्रे यत्र तृतीयसूत्रं सलग्नं तदवधि सूत्रद्वयमास्फालयेत्। पूर्वनिष्पन्नदक्षिणोत्तरगतत्रिकोणपुरोभागे परं त्रिकोणद्वयं मध्यभागे पश्चिमाग्रं योन्याकारं नवमं त्रिकोणं च सम्पद्यते। तद्वह्निवरुणेशसमाश्रिता-श्रीत्युक्तम्। मुनिभिः पुरैव विहितमिति वैदिकपरिग्राह्यत्वमुक्तम्। लोकेऽतिदुर्लभमिदमिति गोप्यतरत्वमुक्तम्" ( पृ. ५८७ ) इति।

**तत ऊर्ध्वस्थितां शक्तिमूर्ध्वं विस्तारयेत् क्रमात् ।**
**पुनराद्यं वह्निचक्रमधो विस्तार्य सुन्दरि ॥ ३१ ॥**

त रतो मनागवकृष्य द्वितीयशक्त्यग्रप्रदेशाद्बहिः [2]सत्रिपादतन्मानदेशे तृतीयशक्त्यग्रं यथा भवति तथाऽधो विस्तारयेच्चक्रसंपुटीकरणक्रमेणेति । अस्मिश्चक्रराजक्रमे मत्प्रयुक्तानामी[3]षन्मनाक्किञ्चिच्छब्दानां यथासम्प्रदायं मानमिति बोद्धव्यम् । न वयं सर्वत्र मानं विलिखामो ग्रन्थविस्तरभीत्या । तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेत् । [4]अस्यायमर्थः—नवयोनिचक्रविन्यासे स्थितं यद्वह्निचक्रं तद् [5]दक्षिणोत्तरतः [6]किञ्चि[7]दवकृष्यानन्तरप्रसृतशक्तिसव्यापसव्या[8]श्रिभेदनक्रमेण तत्पूर्वप्रसृतशक्तिद्वयसव्यापसव्याश्रिद्वयाग्रसंश्ले[9]षक्रमेण पूर्वस्थितवह्न्यग्रकोणसंपुटक्रमेण तद्वह्न्यग्रप्रदेशाद्बहिः[10] [11]पादोनगुणिततन्मानदेशे द्वितीयं वह्न्यग्रं यथा भवति तथा तां शक्तिं तेन वह्निचक्रेण भेदयेदिति । तत ऊर्ध्वस्थितां शक्तिमूर्ध्वं विस्तारयेत् क्रमात् । अयमर्थः—ऊर्ध्व[12]शक्त्यपरभागा[13]श्रियं सव्यापसव्यरेखाद्वयं मनागूर्ध्वं प्रथमवह्न्यग्रभागावधि समाकृष्य द्वितीयवह्नि विस्तारयेद् वि[14]कासयेद् भेदयेदिति यावत् । [1]क्रमा-

विस्तार्य पूर्वप्रसृत[15]शक्तिभेदक्रमेण चक्रसंपुटक्रमेण च[16] ग्रन्थिसंस्प[17]र्शानुरोधेन त्र्यश्रवह्निसंपुटन्यायेन विस्तारयेदित्यर्थः । तत इत्यारभ्य ऊर्ध्वं विस्तारयेदित्यन्तस्यायमर्थः—एवं विन्यासे कृते शक्तित्रयं वह्निद्वयं च संप[18]द्यते । ततश्चाधःशक्ति[19]मध्यशक्तिपरिहारेणोर्ध्व[20]शक्त्यपरभागाश्रि[21]तं तत्सव्यापसव्यरेखाद्वयं मनागूर्ध्वं सर्वोर्ध्ववह्निमध्यप्रदेशावधि विस्तारयेदित्यर्थः ।[1]क्रमादित्यनेन [22]पदेनैवतत्सिद्धम् । प्रथमशक्तिद्वयभेदकत्वेन विन्यस्तो यो

१. ऊर्ध्व—शक. । २. स्पर्धमानदेश—क., सार्धं तन्मानदेशे—ग. । ३. 'ईषन्मनाक्' नास्ति—क. । ४. अय—क. । ५. दक्षिणतः—ग. । ६. 'किञ्चित्' नास्ति—क. । ७. दप—क. । ८. व्याश्र—ख. । ९. षेण—क. । १०. द्विगुणे—क., रध्यर्ध—ख. । ११. 'तत्तन्मानदेशे' इत्येव—क. ख. । १२. शक्तिपर—ख. । १३. श्रय—क. । १४. 'विकासयेत्' नास्ति—ख. ग. । १५. शक्तिसव्यापसव्याश्रभेद—ख. ङ. ज. । १६. 'च' नास्ति—क. ग. घ. छ. । १७. स्पर्शना—घ. । १८. संपाद्यते—ख. ङ. । १९. शक्ति—क. ग. छ. । २०. शक्त्युपरि—क. ग. छ. । २१. श्रस्थं—ख. ङ. । २२. पदेन तन्—क. ग. घ. छ. ज. ।

1. "अर्थरत्नावलीकारस्तु प्रथमवह्नेः पूर्वदिशि स्थितस्य वह्न्यन्तरस्य भेदनं क्रमपदेनोच्यत इति

ऊर्ध्ववह्निमधोवह्निमध्यवह्निविवर्जितम् ।
विस्तार्य भेदयेच्छक्तिमधस्तादाद्यवह्निना ॥ ३४ ॥

विभेदयेदिति । पुनः पूर्ववदेवाद्यां शक्तिं विस्तार्य भेदयेत् । ऊर्ध्ववह्निमधोवह्निमध्यवह्निविवर्जितम् ॥ पूर्ववत् प्रथमदशारषडश्रनिष्पत्त्यनन्तरं यथैतत्सन्निवेशक्रमस्तद्वदित्यर्थः । [1]अधोवह्निमध्यवह्निविवर्जितं यथा भवति तथा कृत्वा ऊर्ध्ववह्निं भेदयेद् विदलयेदित्यर्थः । एतदुक्तं भवति—आद्यतया स्थितोर्ध्वशक्त्यपरभागाश्रयं सव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण मध्यवह्न्यग्रप्रदेशादूर्ध्वं विकृष्य पुनस्तिर्यक्तयोर्ध्ववह्निं भेदयेद् विदलयेदिति । अधोवह्निमध्यवह्निविवर्जितमित्युक्त्या वह्नित्रयास्तित्वकथनं कृतम् । न त्वधोवह्नि-

दित्यर्थः । एवं कृते नवयोनिगर्भदशयोनिचक्राद्बहिः परिवेषक्रमेण षट्कोणं भवति । पुनः पूर्ववदित्यारभ्य ऊर्ध्ववह्निमित्यन्तस्यायमर्थः—पूर्ववदिति प्रथमदशारप्रस्तारे षट्कोणविस्तारानन्तरमधःशक्तिर्मध्यशक्तिपरिहारेणाद्यतयावस्थितोर्ध्वशक्तिसव्यापसव्यरेखाद्वयोर्ध्वतिर्यक्प्रस्तारेणोर्ध्ववह्निर्भेदितो यथा तथा द्वितीयदशारप्रस्तारावसरेऽपि षट्कोणरचनानन्तरमधःशक्तिमध्यशक्तिद्वयपरिहारेणाद्यतया स्थितोर्ध्वशक्तिसव्यापसव्यरेखाद्वयमूर्ध्ववह्निपुरान्तरस्थवह्न्यग्रप्रदेशावधि ऊर्ध्वं विस्तार्य पुनस्तिर्यक्प्रस्तारक्रमेणोर्ध्ववह्निं विभेदयेदित्यर्थः । [1]अधोवह्नीत्यारभ्य आद्यवह्निनेत्यन्तस्यायमर्थः—एवं विन्यासे

१. मध्ये—खाक. ख. । २. द्वूर्ध्वं—खाक. ज., दादि—ज. । ३. विस्तारयेदिति—ख. । ४. 'विदलयेत्' नास्ति—क. । ५. 'इत्यर्थः' नास्ति—क. ग. छ. । ६. 'नव ''क्रमेण' नास्ति—क. ग. छ. । ७. विन्यासा—क. ख. घ. छ. ज. । ८. 'मध्यशक्ति' नास्ति—क. ग. छ. । ९. री—ग. छ. । १०. या स्थि—क. ख. ङ. छ. ज. । ११. यदा तदा—ज. । १२. री—क. ग. । १३. त्या—ख. घ. ङ. । १४. स्त. स्थ—ख. घ. ङ. ज. । १५. 'पुनस्तिर्यक्' नास्ति—क. ग. घ. छ. । १६. रेण—ख. ङ. छ. ज. ।

1. "अधोवह्निमध्यवह्निविवर्जितमिति पदं स्वर्वाशिष्टम् । तदिदं वाक्यद्वयमध्यभागे पठितत्वात् केचित् पूर्ववाक्यशेषत्वेन, अन्ये उत्तरवाक्यशेषत्वेन व्याचक्षाणा विवदन्ते । तत्र शिवानन्दनाथादयस्तावदाहुः—पूर्ववाक्य ऊर्ध्ववह्नेर्भेदनमुक्तम् । तद्व्यपोह्य मध्यवह्न्यधोवह्न्योर्भेदनं निषिध्यते । प्रथमशक्तिवामदक्षिणरेखाभ्यां मध्यवह्निपूर्वकोणावधिविस्तारिताभ्यां तयोर्भेदनप्रसक्तावपि "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" (तै. सं. ५।२।७।१) इतिवदप्राप्तप्रतिषेध एवायं वह्नित्रयास्तित्वबोधनमात्रफलक इति । विद्यानन्दनाथादयस्तु उत्तरवाक्ये

[1]ततो मध्यादिशक्त्यूर्ध्व[2]शक्तिं विस्तारयेदधः ।

मध्यवह्निभेदप्रसङ्गो भवति । [1]प्रसक्त्यभावे [2]प्रतिषेधमात्र कृतम्, दिव्य[4]-(नि? मि)[5]चयनादिवत्। विस्तार्य भेदयेच्छक्तिमधस्तादाद्यवह्निना । विस्तार्य विकास्य । आद्यवह्निनाऽधस्तात् [6]शक्तिं विभेदयेदित्यन्वय । अयमर्थ —आद्यव[7]ह्न्यपरभागार्श्र[8]य सव्यापसव्यरेखाद्व[9]य म[10]र्मद्वयभेदनक्रमेण तृतीयशक्त्यग्रप्रदेशावध्यधस्ताद्विकृष्य पुनस्तिर्यक्तयाऽधस्ताच्छक्तिं विभेदयेदिति । अधस्ताच्छ[11]ब्दस्तन्त्रोच्चारित. । एव द्वितीयदशारनिष्पत्तिर्भवति ॥ ३२–३४ ॥

ततो मध्यादिशक्त्यूर्ध्वशक्तिं विस्तारयेदधः । तथैव संपुटीकुर्यात् सर्वं

---

कृते वह्नित्रयं भवति । चक्रमध्यस्थाश्चतस्र शक्तयो भवन्ति । त[12]त्राद्यमध्यवह्निद्वयं वर्जयित्वाऽधोवह्निसव्यापसव्यरेखाद्वयम[13]धस्ताद् बाह्यशक्त्यन्त स्थितशक्त्यग्रप्रदेशावधि विस्तार्य बाह्यशक्तिं भेदयेदिति[14] एव विन्यासे कृते द्वितीयदशारं भवति ॥ ३२-३४ ॥

तत इत्यारभ्य विस्तारयेदित्यन्तस्यायमर्थ —ततोऽनन्तरं म[15]ध्या चासावादिश्चेति

---

१. अतो–चाक. ख । २ र्ध्वं–वाग. से. सख घ । ३. अतिप्र–क । ४ तिर्यक्त्व-भाडीवत्–क । ५. निचया–ख. । ६ 'शक्ति मध्यधस्ता' नास्ति–ख । ७. वह्नि–क । ८ श्रय–क. । ९ द्वय–क. । १०. तन्मर्म–ग । ११ ब्द स्वत–क । १२. तत्र बाह्यमध्यवह्नि–ख. ङ. ज. । १३. मध्यस्था–क. ख. ग. छ. । १४. दित्ययं –क. ग. घ. छ. । १५. मध्य चादि–क. ग. छ. ।

विस्तार्येत्यस्य कर्मसापेक्षत्वादाद्यवह्निनेति तृतीयान्तस्य तद् वयायोग्यत्वादव्यवहितपूर्वत्वेनोपस्थितमिदमेव पद तत्रान्वेति । तत्राधोवह्निशब्द सर्वोर्ध्ववह्निपर, अस्यैव चक्रस्य विपर्यासेनावलोकने सर्वोर्ध्वतनस्यापि सर्वाधस्तनत्वसभवात् । तेनोर्ध्वमध्यवह्निभिन्न आद्यवह्निरेवेति प्रथमवह्नि विस्तार्येत्यर्थं सपद्यत इत्याहु " ( से. पृ. ३२ ) ।

1. "एव दशारद्वयमुक्त्वा चतुर्दशारचक्रलेखनोपायमुपदिशति ततो मध्यादीत्यारभ्य सर्वाधस्ताद्विभेदयेदित्यन्ते सार्ध पञ्चभि श्लोकै" ( से. पृ. ३३ ) ।
2. प्रतिषेधमात्रमिति । प्रतिषेधस्य विधिर्नास्ति, किन्त्वनुवाद एवेति मात्रपदस्यार्थ । तत्र दृष्टान्त —दिव्याग्निचयनादिवदिति । यथा "न दिव्यग्निश्चेतव्य' (तै. स. ५।२।७।१) इति श्रुतौ दिव्यग्निचयनस्य प्राप्त्यभावेन प्रतिषेधविध्याश्रयणेऽप्रसक्तप्रतिषेधदोष आपतति, अतो नित्यानुवादमात्र तद् हिरण्यनिधानविधानायम्, तथैवात्राप्यप्रितत्प्रसक्त्यभावेनानुवादमात्रमिति भाव ।

**तथैव संपुटीकुर्यात् सर्वं चक्रं सुरेश्वरि ॥ ३५ ॥**
**तां च तेन महेशानि वह्निचक्रेण भेदयेत् ।**
**[1]ग्रन्थिभेदक्रमेणैव सर्वोर्ध्वं सर्वबाह्यतः ॥ ३६ ॥**

---

चक्रं सुरेश्वरि ॥ ततः पश्चात् । मध्यादिशक्त्यूर्ध्वशक्तिः मध्यशक्तिश्चासावादिशक्तिश्चेति मध्यादिशक्तिस्तस्या ऊर्ध्वशक्तिर्मध्यादिशक्त्यूर्ध्वशक्तिस्तां विस्तारयेद् विकासयेत् । अधः अवस्तात् । अयमर्थः—महामध्यशक्तेरूर्ध्वभागे स्थिता या शक्तिस्तस्याः पश्चिमरेखा आद्यवह्न्यग्रभागगा या तां दक्षिणोत्तरतो मनाग् विकृष्य चतुर्थशक्त्यग्रप्रदेशाद् बहिस्तन्मानदेशे पञ्चमशक्त्यग्रं यथा भवति तथाऽधस्ताच्चक्रं संपुटीकुर्यादिति । एवं मध्यात् प्रभृत्यधोधः क्रमेण पञ्च शक्तयः प्राप्ताः ॥ ३५ ॥

तां च तेन महेशानि वह्निचक्रेण भेदयेत् । ग्रन्थिभेदक्रमेणैव सर्वोर्ध्वं सर्वबाह्यतः ॥ मध्योर्ध्वशक्तिपर्यन्तमादिशक्त्यवधि प्रिये । तां शक्तिं भेदयेद्

---

मध्यादिशक्तिस्तस्या ऊर्ध्वशक्तिर्मध्यादिशक्त्यूर्ध्वशक्तिस्तां विस्तारयेत् प्रस्तारयेत् । अधः अधोभागं प्रतीति । कोऽर्थः ? समस्तचक्रस्यादौ "शक्त्या शक्तिं विनिर्भिद्य" (१।२९) इत्यत्र द्वितीयशक्तिनिर्भेद्यत्वेनोक्ता या प्रथमा शक्तिः सा आद्या शक्तिः । सैव रचनावशात् समस्तचक्रमध्यशक्तिः संवृत्ता । तस्या अनन्तरोर्ध्वशक्तिपश्चिमरेखां दक्षिणोत्तराशानुबन्धतयेषद्विकृष्याधो विस्तारयेदित्यर्थः । तथैवेत्यारभ्य सुरेश्वरीत्यन्तस्यायमर्थः—तथेति पूर्वं प्रस्तारिता या शक्तिस्तया शक्त्याऽधोभागस्थं चक्रं संपुटीकुर्यादित्यर्थः । तां चेत्यारभ्य भेदयेदित्यन्तस्य व्याख्या लिख्यते । तामिति चक्रसंपुटन्यायेनाधः प्रस्तारिता या

१. ग्रन्थ—भत. । २. सर्वचक्रं—वाग. से. ख. सक. घ. । ३. पाद. सर्वोर्ध्वात्—धाक. ख. ग. । ४. 'विकासयेत् । अधः' नास्ति—ग. । ५. 'या' नास्ति—क. । ६. स्ततः—क. । ७. मध्यवह्निपरभागगता—ख । ८. दक्षिणे—ख. । ९. चतुरस्र—ख. । १०. स्तन्मनागुदेशे—क. । ११. शक्तिनिष्पत्तिः प्राप्ता—ख. ग. । १२. 'मध्यादि⋯प्रथमा शक्तिः' नास्ति—ख. ङ. ज. । १३. 'गं प्रतीति⋯निर्भेद्यत्वेनोक्ता' नास्ति—ग. । १४. संभूता—ख. ग. छ. । १५. रेखा—क. ग. घ. ङ. । १६. बद्ध—ख. ग. ङ. । १७. यथा—ख. ग. ।

1. "प्राधान्येनग्रन्थिभेदनात्मकविशेषणानां यथाकथञ्चिदन्यथा नयनमपि न स्वरसमित्युपेक्षितम्" ( से. पृ. ३४ ) ।

**मध्योर्ध्वशक्तिपर्यन्तमादिशक्त्यवधि भिदे ।**
**ततो बाह्यस्थशक्त्यन्तः शक्तिमूर्ध्वं विकासयेत् ॥ ३७ ॥**

विदलयेत् । सर्वोर्ध्वं यथा भवति तथा चतुर्थवह्न्यग्रं[2] यथा भवति तथा कृत्वेत्यर्थः । पर्यन्तावधिशब्दौ मर्यादावचनौ । एतदुक्तं भवति—यद्वह्निचक्रं द्वितीयदशारं प्रस्तारक्रमेणैतामेव[3] शक्तिमभिनत्[4] तेन वह्निचक्रेणेदानीं भासमानवह्निपुरत्रयबाह्यवह्निपुरपश्चिमरेखां[5] दक्षिणोत्तरतो विकृष्य भेद्यशक्त्यर्थाग्रावधि[6] तदग्रद्वयविदलनद्वारेण तत्तत्स्थानगताश्चतुष्टयमर्यादाविन्यास[7]-क्रमेण सर्वचक्रकवलनक्रमेण[8] च[9] तृतीयवह्न्यग्रप्रदेशाद् बहिस्तन्मानदेशे तुरीयाग्निकोणं[10] यथा भवति तथा तां शक्तिं तेन वह्निचक्रेण विदलयेदिति । ततो बाह्यस्थशक्त्यन्तः शक्तिमूर्ध्वं विकासयेत् । अस्यायमर्थः—

---

शक्तिस्तां भेदयेदित्यर्थः । तेनेति । तेन "भूयो[11] वह्निपुरेण संपुटीकृत्य" (१।२९) इत्यत्र[12] रचितो योऽयं प्रथमो[13] वह्निस्तस्याधः समनन्तरस्थितवह्निपाश्चात्यरेखां[14] दक्षिणोत्तराशानुक्रमेण पूर्वमसृतशक्त्यग्रावधि[15] विकृष्य तदग्र[16]विदलनद्वारेण ग्रन्थिसंश्लेषानुरोधेन वक्ष्यमाणेन तेनोर्ध्वं प्रस्तारयेदित्यर्थः । ग्रन्थीत्यादि बाह्यत इत्यन्तस्यायमर्थः—ग्रन्थिभेदक्रमेण वेत्यग्राणां[17] संश्लेषयोगेनेत्यर्थः । सर्वोर्ध्वमिति । सर्वोर्ध्वं वह्निर्यथा भवति तथोर्ध्वं विस्तारयेत् । सर्वबाह्यत इति सर्वचक्रकवलनक्रमेणेत्यर्थः । केन प्रकारेण प्रस्तारयेदित्य[18]पेक्षायां विशिनष्टि—मध्योर्ध्वशक्तिपर्यन्तमिति । समस्तचक्रमध्यस्थिता या प्रथमा शक्तिस्तस्याः समनन्तरोर्ध्वस्थिता या शक्तिस्तस्याः पर्यन्तं समीपं रेखाविन्यासः कर्तव्यः । आद्यशक्त्यवधीति । आद्यशक्तिर्मध्यशक्तिः सैव रचनावशात् सर्वबाह्योर्ध्ववह्न्यन्तःशक्तिरभवत् । तदवधि प्रस्तारयेत् । कोऽर्थः ? यथा तस्या भेदो न भवति संश्लेषश्च संभवति तथा प्रस्तारयेदिति यावत् । ततो बाह्यस्थेत्यादेः सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं

---

१. माद्य—अ. सक. ख. । २. 'चतुर्थ·····तथा' नास्ति—ग. । ३. ■ ता—क. ख. । ४. 'अभिनत्' नास्ति—क. ख. । ५. रेखा—क. ख. । ६. थावधि—क., प्रावधि—ग. । ७. मध्यपदा—क. । ८. रूपेण—क. ख. । ९. 'च' नास्ति—क. । १०. तुर्या—क. ख. । ११. 'भूयो' नास्ति—क. ग. छ. । १२. तत्र—क. ग. छ. । १३. भव—क. ग. घ. छ. । १४. रेखाद्वय—क. ग. घ. छ. । १५. आ—ख. घ. ङ. ज. । १६. तदध—क. ग. छ. । १७. अग्राणां—ख. ङ. ज. । १८. 'प्रस्तार''संभवति तथा' नास्ति—ख. ङ. ।

तथा[1] विस्तारयेच्छक्तिमाद्यामप्यूर्ध्वमीश्वरि।
सर्वोर्ध्ववह्नयधोवह्निपर्यन्तं वीरवन्दिते ॥ ३८ ॥
तया[2] विभेदयेद् वह्निचक्रं सर्वोर्ध्वसंस्थितम् ।

अनन्तरप्रसृतपञ्चशक्तिरूपा बाह्यस्थिता या शक्तिस्तस्या अन्त स्थिता या शक्तिस्तस्या शक्ते पश्चिमरेखाद्वय सव्यापसव्यरेखाद्वय मनागूर्ध्वं विकास्य सर्वोर्ध्वशक्तिपाश्चात्यरेखादक्षिणोत्तराग्राभ्या सह विकासयेद् बध्नीयादिति विकासयेदिति[1] पद तेनोक्तम् ॥ ३६–३७ ॥

तथा विस्तारयेच्छक्तिमाद्यामप्यूर्ध्वमीश्वरि। सर्वोर्ध्ववह्नयधोवह्निपर्यन्तं वीरवन्दिते। तया विभेदयेद्वह्निचक्रं सर्वोर्ध्वसंस्थितम्। वीरवन्दिते! इदन्ताकवलनप्रगल्भा वीरास्तैर्वन्दिते आत्मत्वेन परामृष्टे। अयमर्थ —चक्रराजविन्यासक्रमे सर्वाद्या या शक्ति प्रस्तारवशादूर्ध्वतया स्थिता तस्या शक्ते

वीरवन्दिते इत्यन्तस्यायमर्थ —तैते अनन्तर सफलचक्रसपुटन्यायेन वहि स्थिता या शक्तिस्तस्या समनन्तरोर्ध्वस्थितशक्तिसव्यापसव्यरेखाद्वयमनागूर्ध्वं सर्वोर्ध्ववह्नयन्तस्थवह्निगर्भस्थशक्तिपाश्चात्यरेखावधि ऊर्ध्वं प्रस्तारयेदित्यर्थ । अयमर्थ —सर्वोर्ध्वशक्तिपाश्चात्यरेखया पूर्वप्रस्तारितरेखाद्वय पुनस्तिर्यगीपत् प्रस्तार्य नियध्नीयादिति यावत्। सर्वोर्ध्ववह्निरिति रचितसमस्तचक्रस्यार्ध्वस्थितो यो वह्निस्तस्यान्तर्वह्निसमीपं हे वीरवन्दिते इत्यर्थ.। तयेत्यारभ्य सर्वोर्ध्वसंस्थितमित्यन्तस्यायमर्थ —तया तेन प्रकारेण।

१. 'सर्वोर्ध्व', 'तया इति पङ्क्तिक्रम –क से विहाय सवत्र। २ या सर्वोर्ध्व–ख। ३ तया–ख, स्त्र. घ भद्रे–सख। ४ अनन्तर–ग। ५ 'सव्यापसव्यरेखाद्वय' नास्ति–क। ६. विकासयेत्–ब। ७. राभ्यां–स ग। ८ 'विकासयेद् बध्नीयादिति' नास्ति–ख। ९. प्रोक्तम्–ब। १० तया–ख ग.। ११ क्रमेण–ग.। १२ 'स्थिता' नास्ति–क। १३ 'तत' नास्ति–ख. ग. घ, छ.। १४. तस्या' नास्ति–ख. ङ. ज.। १५. न्त' स्थिता शक्ति–ख ङ. ज.। १६ 'वह्नयन्तस्थ' नास्ति–ग.। १७. पश्चाद्रे–ख. ग. घ. छ.। १८. 'वधि' प्रस्तारितरेखा' नास्ति–ग. छ.। १९. 'ऊर्ध्वं नास्ति–क. ग. घ.। २०. रेखापूर्वप्रस्तारितरेखाद्वय–घ ङ. ज।

1. 'विकासयेदिति पदस्यैवायमर्थ इति तु प्राञ्च" ( से. पृ ३४ )।

[1]सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये ॥ ३९ ॥
विस्तार्य वाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेत् ।

पश्चिमरेखाश्रयं सव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण सर्वोर्ध्ववह्न्यन्तः-स्थितवह्न्यग्रप्रदेशावध्यूर्ध्वं विकृष्य पुनस्तिर्यक्तया सर्वोर्ध्ववह्निं भेदयेदिति ॥ ३८ ॥

सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये । विस्तार्य वाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेत् ॥ अनेन सूत्रेण परिशिष्टचतुष्टयाश्रसमुल्लासः क्रियते । अयमर्थः—सर्वचक्रस्योर्ध्वभागतया स्थितो यो वह्निस्तस्य वह्नेरधोभाग-प्रदेशे वाह्यशक्तिरेखाश्लिष्टाश्रिसव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेणाधो विस्तार्य पुनस्तिर्यक्तया सर्ववह्न्यूर्ध्वरेखाग्रयोर्विकासयेत् सर्वाधस्तात् स्थितां

---

यथा पूर्वं सर्वोर्ध्ववह्निपरिसर एव रेखाप्रस्तारोऽकारि तथेत्यर्थः । आद्यामिति प्रथमां शक्तिमिति यावत् । आदिशक्तिरेव प्रस्तारवशादूर्ध्वशक्तित्वेन विस्तृता । तस्याः सव्या-पसव्यरेखाद्वयमूर्ध्ववह्न्यन्तःस्थवह्न्यग्रप्रदेशावधि विस्तार्य तथा स्थितया तया शक्त्या सर्वोर्ध्वस्थितं वह्निचक्रं भेदयेदिति यावत् । एवं विन्यासे कृते नवकोणदशकोणद्वयाद्बहिः परिवेषक्रमेण चतुर्दशकोणं भवति ॥ ३५-३८ ॥

---

१. म. ब. सख. घ. पुस्तकेषु "ततः" (१।४२) इत्यादिश्लोकानन्तरमेव श्लोकः स्थापितः । २. वह्नि–सख. । ३. च–सक. । ४. 'सव्यापसव्यरेखाद्वयं' नास्ति–क. । ५. 'सर्वोर्ध्वं······पुनस्ति-र्यक्तया' नास्ति–ग. । ६. विशिष्टाश्रचतुष्टयसमु–क. । ७. 'अधो' नास्ति–ख. । ८. 'सर्व···सयेत्' नास्ति–क. ग. । ९. इतः परम्–'तदनु वह्निस्थानगतसव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण विस्तार्य पुनस्तिर्यक्तयाऽधस्तात् स्थितां' इत्यधिकः पाठः–ख. । १०. सर्वोर्ध्वं–क. ग. घ. । ११. स्थिता–ख. ड. ज. । १२. 'तया' नास्ति–ग. ।

1. "अर्थरत्नावल्यां त्वयं श्लोकस्ततः सृष्टिमहाचक्रमिति वक्ष्यमाणश्लोकोत्तरं व्याख्यातः । ततोऽपि प्राचीनटीकायां त्विहैव व्याख्यातः संमतश्चेति स एव पक्षः स्वीकृतोऽस्माभिः" (से. पृ. ३५) । प्राचीनटीकायामृजुविमर्शिन्याम् ।

**तथा[1] विस्तारयेच्छक्तिमाग्रामप्यूर्ध्वमीश्वरि।**
**सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं वीरवन्दिते ॥ ३८ ॥**
**तया[3] विभेदयेद् वह्निचक्रं सर्वोर्ध्वसंस्थितम् ।**

---

अनन्तरप्रसृतपञ्चशक्तिरूपा बाह्यस्थिता या शक्तिस्तस्या अन्त स्थिता या शक्तिस्तस्या शक्ते पश्चिमरेखाद्वय सव्यापसव्यरेखाद्वय मनागूर्ध्वं विकास्य सर्वोर्ध्वशक्तिपाश्चात्यरेखादक्षिणोत्तराग्राभ्या सह विकासयेद् बध्नीयादिति विकासयेदिति[1] पद तेनोक्तम् ॥ ३६–३७ ॥

**तथा विस्तारयेच्छक्तिमाग्रामप्यूर्ध्वमीश्वरि। सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं वीरवन्दिते। तया विभेदयेद्वह्निचक्रं सर्वोर्ध्वसंस्थितम् ।** वीरवन्दिते ! इदन्ताकवलनप्रगल्भा वीरास्तैर्वन्दिते आत्मत्वेन परामृष्टे। अयमर्थ —चक्रराजविन्यासक्रमे सर्वाद्या या शक्ति प्रस्तारवशादूर्ध्वतया स्थिता तस्या शक्ते

---

वीरवन्दिते इत्यन्तस्यायमर्थ —तत अनन्तर सकलचक्रसपुटन्यायेन बहि स्थिता या शक्तिस्तस्या समनन्तरावस्थितशक्तिसव्यापसव्यरेखाद्वयमनागूर्ध्वं सर्वोर्ध्ववह्न्यन्तस्थवह्निगर्भस्थशक्तिपाश्चात्यरेखावधि ऊर्ध्वं प्रस्तारयेदित्यर्थ । अयमर्थ —सर्वोर्ध्वशक्तिपाश्चात्यरेखाया पूर्वप्रस्तारितरेखाद्वय पुनस्तिर्यगीषत् प्रस्तार्य निबध्नीयादिति यावत्। सर्वोर्ध्ववह्निरिति रचितसमस्तचक्रस्योर्ध्वस्थितो यो वह्निस्तस्यान्तर्वह्निसमीप हे वीरवन्दिते इत्यर्थ । तयेत्यारभ्य सर्वोर्ध्वसस्थितमित्यन्तस्यायमर्थ —तया तेन प्रकारेण।

---

१. 'सर्वोर्ध्व', 'तथा इति पङ्क्तिकम —ङ से विहाय सर्वत्र। २ द्यां सर्वोर्ध्वं—घ। ३ तया—ख. सच. घ भद्रे—सख.। ४ अनन्तर—ग। ५ 'सव्यापसव्यरेखाद्वय' नास्ति—क। ६. विकासयेत—क। ७. राभ्या—ख ग। ८ 'विकासयेद् बध्नीयादिति' नास्ति—ख। ९ प्रोक्तम्—क। १० तया—ख ग.। ११ क्रमेण—ग.। १२ 'स्थिता' नास्ति—क। १३ 'तत' नास्ति—क. ग. घ. छ.। १४. तस्या' नास्ति—ख. ङ. ज.। १५. न्त स्थिता शक्ति—ख. ङ. ज.। १६ 'वह्न्य न्तस्थ' नास्ति—ग.। १७. पश्चाद्रे—क. ग घ. छ.। १८. 'वधि प्रस्तारितरेखा' नास्ति—ग. छ.। १९. 'ऊर्ध्वं नास्ति—क. ग. घ। २०. रेखापूर्वप्रस्तारितरेखाद्वय—ख ङ. ज.।

1. 'विकासयेदिति पदस्यैवेतावानर्थ इति तु प्राञ्च" ( से. पृ ३४ )।

[1]सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः　प्रिये ॥ ३९ ॥
विस्तार्य [2]बाह्यशक्तिं [3]तु सर्वाधस्ताद्विभेदयेत् ।

---

पश्चिमरेखाश्रयं [4]सव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण सर्वोर्ध्ववह्न्यन्तः-स्थितवह्न्यग्रप्रदेशावध्यूर्ध्वं विकृष्य पुनस्तिर्यक्तया [5]सर्वोर्ध्वंवह्निं भेदयेदिति ॥ ३८ ॥

सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये । विस्तार्य बाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेत् ॥ अनेन सूत्रेण [6]परिशिष्टचतुरस्राश्रसमुल्लासः क्रियते । अयमर्थः—सर्वचक्रस्योर्ध्वभागतया स्थितो यो वह्निस्तस्य वह्नेरधोभाग-प्रदेशे बाह्यशक्तिरेखाश्लिष्टाश्रिसव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण[7]घो विस्तार्य पुनस्तिर्यक्तया [8]सर्ववह्न्यूर्ध्वरेखाग्रयोर्विकासयेत् सर्वाधस्तात् स्थिता

---

यथा पूर्वं [10]सर्वोर्ध्ववह्निपरिसर एव रेखाप्रस्तारोऽकारि तथेत्यर्थः । आद्यामिति प्रथमां शक्तिमिति यावत् । आदिशक्तिरेव प्रस्तारवशादूर्ध्वशक्तित्वेन विस्तृता । तस्याः सव्या-पसव्यरेखाद्वयमूर्ध्ववह्न्यन्तःस्थवह्न्यग्रप्रदेशावधि विस्तार्य तथा [11]स्थितया [12]तया शक्त्या सर्वोर्ध्वस्थितं वह्निचक्रं भेदयेदिति यावत् । एवं विन्यासे कृते नवकोणदशकोणद्वयाद्बहिः परिवेषक्रमेण चतुर्दशकोणं भवति ॥ ३५-३८ ॥

---

१. अ. ब. सस. घ. पुस्तकेषु "ततः" (१।४२) इत्यादिश्लोकानन्तरमेव श्लोकः स्थापितः । २. वह्नि—सस. । ३. च—सक. । ४. 'सव्यापसव्यरेखाद्वयं' नास्ति—क. । ५. 'सर्वोर्ध्वं·····पुनस्ति-र्यक्तया' नास्ति—ग. । ६. विशिष्टाश्रचतुष्टयसमु—क. । ७. 'अधो' नास्ति—ख. । ८. 'सर्व···सयेत्' नास्ति—क. ग. । ९. इतः परम्—'तदनु वह्निस्थानगतसव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण विस्तार्य पुनस्तिर्यक्तयाऽधस्तात् स्थिता' इत्यधिकः पाठः—ख. । १०. सर्वोर्ध्वं—क. ग. घ. । ११. स्थिता—ख. ङ. ज. । १२. 'तया' नास्ति—ग. ।

1. "अर्थरत्नावल्यां त्वयं श्लोकस्ततः सृष्टिमहाचक्रमिति वक्ष्यमाणश्लोकोत्तरं व्याख्यातः । ततोऽपि प्राचीनटीकाया त्विहैव व्याख्यातः संमतश्चेति स एव पक्षः स्वीकृतोऽस्माभिः" (से. पृ. ३५) । प्राचीनटीकायामृजुविमर्शिन्याम् ।

[1]एतद्बाह्यगतं पद्ममष्टपत्रं समालिखेत् ॥ ४० ॥
तद्बाह्यतोऽपि देवेशि षोडशारं तथैव च ।
परिवेषं भूपुरं च चतुर्द्वारोपशोभितम् ॥ ४१ ॥

---

बाह्यां शक्तिं भेदयेदिति। अस्य सूत्रस्य [2]पूर्वार्धेनाश्रिद्वयमुत्तरार्धेनाश्रिद्वयं च कथितम् । एवं चतुर्दशारं सम्पन्नम् ॥ ३९ ॥

सार्धेन सूत्रेण चक्रशेषमाह—एतद्बाह्यगतमित्यादिना चतुर्द्वारोपशोभित-मित्यन्तेन । परिवेषशब्देन [3]वृत्तत्रयं लक्ष्यते ॥ ४०–४१ ॥

---

१. पङ्क्तित्रयं वाम. ऋ. सेः विहाय सर्वत्र ७५ श्लोकानन्तरं दृश्यते । २. चक्र–सघ. । ३. समालिखेत्–च. 'तद्बाह्ये षोडशदलं विलिखेत् परमेश्वरि–सख. । ४. परिवेश-समायुक्त–वाक. ख ग., समोपेत–सघ. । ५. र्वं सुशोभितम्–सघ. । ६ इमे श्लोका अधिकाः—[4]"मध्य त्र्यस्रं तथाष्टारं द्वे दशारे चतुर्दशं । तद्बाह्यतोऽष्टपत्रं च षोडशारं महीपुरम् ( भवम् ) ॥ सर्वानन्दमयं चादौ सर्वसिद्धिप्रदं परम् । सर्वरोगहरं चान्यत् सर्वरक्षाकरं तथा ॥ सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम् । सर्वसंक्षोभणं चान्यत् सर्वाशापरिपूरकम् ॥ त्रैलोक्य-मोहनं चेति नवधा नवभिर्भवेत् ॥" वाम. से. । ७. ध–क. । ८. ध–क. । ९. गतमिति–क, ख. । १०. 'चतुर्द्वारोपशोभितमित्यन्तेन' नास्ति–च. ख. । ११. शेष–क. ख. ।

1 "एवं षट्चक्राणि मन्त्रक्रान्त्यानुपदिश्यावशिष्टं चक्रत्रयमुपदिशति सार्धश्लोकेन । अयं तु सार्धश्लोक एवमेतस्य चक्रस्येति दूरस्थश्लोकोत्तरमर्थरत्नावल्या व्याख्यातं । तदपि , प्राचीनटीकाविरोधादसमतत्वाच्चोपेक्ष्यम्" ( से. पृ. ३५ ) । प्राचीनटीका ऋजुविमर्शिनी । अपरपक्षस्तु अर्थरत्नावलीक्रममेव समर्थयन्ति, अन्या मातृकाश्च ।

2. प्राञ्चस्तु—अस्मिन् श्लोके पूर्वार्धेनैव कोणद्वयमुत्तरार्धेनैवेतरत्कोणद्वयमुक्तमिति व्याचक्षते" ( से. पृ. ३५ ) ।

3. "यत्तु वृत्तत्रयं च षरमोमदनत्रयं चेति यामलं यच्च ज्येष्ठारूपचतुष्कोणं वामारूपभूमित्रय-मिति षष्ठपटले वक्ष्यमाणं तत्सर्वं कर्णिकावृत्तद्वयमेलनेनैव त्रित्वाभिप्रायकमिति बहवो व्याचक्षते" ( से. पृ. ३६ ) ।

4. "एतेऽप्युक्तश्लोकाः क्वचिट्टीकायां न दृश्यन्ते, पुस्तकेषु तूपलभ्यन्ते" ( से. पृ. ४० ) । वामकेश्वरीमतविवरणे ऋजुविमर्शिन्यामर्थरत्नावल्यामन्यासु मातृकासु च नैवोपलभ्यन्ते ।

ततः सृष्टिर्[1]महाचक्रं तृतीयं[2] तु हुताशनम्[3] ।
मध्यं[4] स्थितिर्द्वितीयं तु संहारः[5] प्रथमं च यत्[6] ॥ ४२ ॥

एवं प्रसृतस्य चक्रराजस्य त्र्या[7]त्मकतामाह—ततः सृष्टिर्महाचक्रं तृतीयं तु हुताशनम् । मध्यं स्थितिर्द्वितीयं तु संहारः प्रथमं च यत् ॥ ततो बहिश्चतुरश्रं[8] पद्मद्वयं च । सृष्टिः[9] सृष्टिरिति संज्ञा । महाचक्रं सम्पूर्णं[10]चक्रम् । तृतीयमष्टारं[11] मध्यं[12] त्र्यश्रं च । तु[13]र्विशेषार्थे । तच्चक्रं हुताशनाधिष्ठातृकम् । हुताशनोऽधिष्ठाता तृतीयचक्रस्ये[14]त्यर्थः । मध्यं चतुर्दशारं दशारद्वयं च । स्थितिः स्थितिरिति संज्ञा । द्वितीयमा[15]न्तरापेक्षया बाह्यापेक्षया च । पूर्वत्र हुताशनशब्दप्रयोगादत्र सूर्यश[16]ब्दः प्रयुक्तो मन्तव्यः । सूर्याधिष्ठातृकं मध्यं द्वितीयं च[17]क्रमित्यर्थः । बाह्यं[18] चक्रं सोमाधिष्ठातृकमिति[19] च बोद्धव्यम् । बाह्यमध्यमयोश्चक्रयोः सृष्टिरिति स्थितिरिति संज्ञेति । कथमिति चेत्तदाह—संहारः प्रथमं

ततः पुनरेवंविशिष्टं किञ्चिदवशिष्टमप्यभीष्टदमिष्टजनसेवितमष्टसिद्धिप्रदाष्टयोगिनीजुष्टं प्रकृष्टाष्टगुणं[20]सिद्धिदं भ[21]क्तहृष्टितुष्टिकरमनिष्टापहं चक्रमष्टमूर्तिर्विभिविभज्य शि[22]ष्टजनानामतिरहस्यमपि विशिष्ट[23]चेतसा तत इत्यादिना संहारं प्रथमं च यदित्यन्तेन मन्त्येनाभिलषितसकलपुरुषार्थानां निजभक्तिक्षालितस[24]कलमलानामम[25]लाशयानामनुमाक्षाणां सर्वार्थसाध[26]कं सुन्दरं श्रीमहात्रिपुरसुन्दरीमन्दिरं सृष्टिस्थितिसंहारात्मना

१. सृष्ट्या–वाक. ख. ग. अ. सक., सृष्टिम–से., शक्त्या–ब. । २. प्रथमं–वाक. ख. ग., तुरीयं–अ., तृकायं–ब. सक. । ३. हुताशन –से., चक्रनाशनम्–ब. सक., भूतनाशकम्–सख. । ४. मध्ये तु द्वितयं स्थित्या–वाक. ख. ग., मध्यस्थितं–अ. ब. सक. ख., मध्ये स्थितं–से. । ५. रं प्रथमं–अ., रं पञ्चमं–वाक. ख. ग. । ६. "चतुर्दशदशद्वन्द्वमष्टावेकं महे (सुरे)श्वरि । पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः ॥" एष श्लोकोऽधिकः–च. सघ. । ७. त्रितयात्मक–क. । ८. रश्रद्वयं–क. । ९. 'सृष्टिः' नास्ति–ख. । १०. सम्पूर्णम्–क. ग. । ११. 'अष्टारं' नास्ति–क. । १२. मध्य–क. ख. । १३. तत्र विशेषार्थो–ग. । १४. 'चक्र' नास्ति–क. । १५. मन्त–ग. । १६. शब्दप्रयोगो–क. । १७. यच–क. ख. । १८. ह्याच–क. ख. । १९. 'इति' नास्ति–क. । २०. 'गुण' नास्ति–क. ग. छ. । २१. भवतु–छ. । २२. 'शिष्टजनानाम्' नास्ति–क. ग. छ. । २३. परहृष्टचेतसा–ख. ड. ज. । २४. सर्व–क. ख. ग. । २५. 'अमलाशयानां' नास्ति–ख. घ. ड. ज. । २६. कानां–क. ग. छ. ।

च यदिति । प्रथम चक्रं संहारसंज्ञ[1]मिति यस्मात् । एतदुक्तं भवति— यथोक्तं[2] त्रिभेदभिन्नं सृष्टिस्थितिसंहारात्मकं सोम[3]सूर्यवह्न्यधिष्ठातृकं शक्तिकामवाग्भव[4]-बीजप्रधानं ब्रह्मविष्णुरुद्रमयं जाग्रत्स्वप्नसुषुप्तिरूपं पृथिव्यन्तरिक्षाद्युप-लक्षितमकारोकारमकारविग्रहम् ऋगादिशब्द[5]राश्युज्ज्वलं क्रियाज्ञानेच्छापर-पर्यायं सत्त्वरजस्तमःस्वभावं सर्वदेवतासारं[6] विश्वात्मकमिदं त्रैपुरं महाचक्र-मिति । अस्य महाचक्रस्यैवं स्कन्धनित्वेऽभियुक्तोक्तिः—

---

त्रिधा व्यवस्थितमिदं त्रिधाम[7]त्रिमूर्तित्रिशक्तित्रितत्त्वाद्ि[8]भिस्त्रिभेदेन व्यवस्थितं सर्वात्म-कमिति परमकारुणिको भगवानु[9]पदिशति। तत्रैषाक्षरयोजना–महाचक्रमिति । सनवयोनि-दशकोणद्वयचतुर्दशकोणस्फुरत्कर्णिकाष्टदलनलिनवलय[10]परीतं परितः प्रस्फुरत्षोडशदल-वृत्तचतुरस्रे[11]चतुर्द्वारशोभितं चतुर्द्वारतोरणपरिघटितं घण्टानिनादरमणीयं सुरवरसपर्या-समुल्ल[12]सितमन्दारसन्तानाद्यनेक[13]सुरतरुकुसुमपरिमलमिलदलिकुल[14]बहुझङ्कारमुखरपरिसरं सन्ततविरस्कृतभास्करकर[15]प्रभाघप्रभामण्डलमण्डितसकलदिगन्तरालम् इतस्ततः प्रकीर्ण-तारकावि[16]लसितनभस्त[17]लमहावितानत्रैलोक्यमण्डपान्तः सर्वर्तुसन्निधानसम्पन्नसकल-[18]सुमनस्समन्वितवसन्तकन्दर्पपरिरक्षितनन्दनोद्यानमध्यस्थिताधारशक्तिहेत्व[19]र्णवमहापङ्के-रुहमहाप्रेतासनोपरि पर्यस्तपर्यङ्कस्फुरत्सहस्रदलकमलकर्णिकान्तरल्लसितं पूजामण्डलं[20] महाचक्रमुच्यते । तत सृष्ट्येति[21] । सृष्ट्या स्थितमिदं चक्रं सृष्ट्यात्मकमित्यर्थः । चतुरस्रा-द्वारभ्या[22]ष्टदलान्तं महाचक्रं सृष्टिसंज्ञमिति यावत् । तुरीयं तु हुताशनमिति । अस्य चक्रस्य तुरीयं चक्रं चतुर्दशारदशारद्वयमतीत्यानन्तरं नवयोनिचक्रं यत्[23]तत्संहारात्मक-मिति यावत् । मध्यस्थितं द्वितीयं त्विति । सृष्टिसंहारयोरन्तरालं यत्तद्दशारद्वन्द्वचतुर्दशारं

---

१. चक्र–क. । २. यथोक्तत्रिविधभिन्न–क. । ३. 'सोम : तृक' नास्ति–ख. । ४. वाग्भव-काम–क., कामराजवाग्भव–ख. । ५. ब्दोज्ज्व–क. । ६. धारं–क. । ७. धाममूर्ति–क. छ. । ८. दित्रित्रि–क. ख. ग. घ. ङ. । ९. वान् वदति–ख. ङ. ज. । १०. वलयं परितः–क. ख. ग. छ. ज. । ११. रस–क. । १२. ल्ला–ख. ङ. ज. । १३. 'सुरतरु' नास्ति–ख. ङ. ज. । १४. 'बहु' नास्ति–ख. घ. ङ. ज. । १५. 'कर' नास्ति–क. ग. छ. । १६. विक–घ. । १७. स्थल–ख. घ । १८. कुसुमसमयान्वित–क. ग. छ. । १९. हेतुर्नवमहाप्रेतासनपङ्केरुहो-परि–ख. घ. ङ. ज. । २०. मण्डप–ख. । २१. सृष्ट्यादि सृष्ट्यान्त–ख. ङ. ज. । २२. द्वाद-प्रमा–ख. ङ. ज. । २३. 'यत्' नास्ति–क. ग. घ. छ. ।

ब्राह्म्याद्यष्टौ च तद्युक्तमनङ्गकुसुमात्मकम् ।
सृष्टिचक्रं तथा प्रोक्तं स्थितिचक्रं ततः परम् ॥
चतुर्दशारं प्रथमं दशारं पुनरेव तत् ।
स्थितिचक्रं तथा प्रोक्तं संहारमपि संशृणु ॥

---

स्थितिचक्रमित्यर्थः । एवं कथमिति चेत् ? संहारं प्रथमं च यत् । प्रथमं चक्रं संहारचक्रमित्युक्तमिति यतस्तृतीयं चक्रं सृष्टिरूपमित्युक्तमिति यतस्तस्माद् द्वितीयमन्तरालस्थं चैकं स्थित्यात्मकमित्यर्थः ।

अथ पुनरिह लोपामुद्रासम्प्रदाये विशेषोऽस्ति । पूर्वं "चतुराज्ञाकोशभूताम्" ( १।१२ ) इत्युक्तम् । अत्र सृष्ट्यादिपदेन चतुराम्नायरूपत्वं चक्रस्य लक्ष्यते । तदुक्तं सकेतपद्धत्याम्—

पूर्वाम्नायः सृष्टिरूपः स्थितिरूपस्तु दक्षिणः ।
संहारः पश्चिमो ज्ञेयो ह्यनाख्यस्तूत्तरः स्मृतः ॥ इति ।

तत्र चतुरश्राद्यष्टारान्तचक्रत्रितयं पूर्वाम्नायरूपं सृष्टिरूपत्वात्, तथा चतुर्दशारदशारद्वयमिति त्रितयं दक्षिणं स्थितिरूपत्वात्, तथाष्टारं त्र्यस्रं मध्यमिति त्रितयं पश्चिमरूपं संहाररूपत्वात् । सर्वसमष्टिचक्रमनाख्येयत्वादुत्तररूपमिति । अन्यच्च सृष्ट्यादित्रितयं प्रत्येकं त्रैविध्यात्मकं नवनित्यामयमवगन्तव्यम् । पुनरेकैकस्य समष्टिव्यष्ट्यात्मना पञ्चरूपत्वमवगन्तव्यम् । यथा समष्टिसृष्टिः, सृष्टिसृष्टिः, स्थितिसृष्टिः, संहारसृष्टिः, अनाख्येति सृष्टिपञ्चकं पूर्वे; एवं स्थितिपञ्चकं दक्षिणे; तथा संहारपञ्चकं पश्चिमे; अनाख्यारूपमुत्तरमेकरूपमेव । एवं चक्रस्य त्रिपञ्चीकरणसमष्टिव्यष्ट्यात्मना षोडशात्मत्वात् षोडशनित्यारूपत्वमवगन्तव्यम् । एवं परमगुरुणा परमशिवेनोपदिष्टं यो

---

१. नास्त्येषा पङ्क्तिः—ख. । २. त्रुप्य—क. । ३. यमतः—क. ख. । ४. 'अन्तरालस्थं' नास्ति—क. ग. घ. छ. । ५. 'चक्रं' नास्ति—क. ख. ङ. छ. ज. । ६. 'सृष्टिरूपत्वात्' नास्ति—क. ग. घ. छ. । ७. 'दशार' नास्ति—क. घ. छ. । ८. त्रिकं—ख. घ. ङ. ज. । ९. 'नव' नास्ति—क. ग. छ. । १०. इतः परम्—'चक्रस्य त्रिवृत्करणे मूलविद्यारूपत्वमवगन्तव्यम्' अधिकः पाठः—क. ग. छ. । ११. अनाख्येय—ख. ग. ङ. ज. । १२. त्रिपञ्चकरणे—ख. छ. । १३. षोडशाकार—क. ग. छ. ।

[1]वशिन्यष्टौ[1] तदादिस्य त्र्यश्रे[2] मध्यं क्रमात् पुनः ।
सहारश्चिविव प्रोक्तस्त्वनाख्या सर्वचक्रगा ॥ इति ॥ ४२ ॥

जानाति स यो[3]ग्यो भवति गुरुप्रसादत इति । ए[4]तदुक्तं सङ्केतपद्धत्याम्—

तुर्यात्मकं पञ्च[5]युतं योगिनीचक्रमण्डलम् ।
यो जानाति स गुरुात्मा सोऽन्वयी देशिकाग्रणीः ॥ इति ।

शिघ्रमप्यभीष्टदमित्यत्र शिघ्रशब्देन ईषदसमाप्तिः[6] सूचिता चक्रस्य । तदिदानीं दर्शयति । सर्वोर्ध्ववह्न्यधोभाग इत्यारभ्य भेदयेदित्यन्तस्यायमर्थः—सर्वोर्ध्ववह्न्यधोभाग इति सर्वचक्रस्योर्ध्वभागे स्थितो यो वह्निस्तस्य वह्नेरधोभाग इत्यध प्रदेशे बाह्यशक्तिश्लिष्टाश्रितया सव्यापसव्यै[7]स्थितवह्निद्वयग्रन्थिपर्यन्तस्थितरेखाद्वयं वामतोऽधो विस्तार्य तथा सव्यभागस्थितरेखाद्वयमप्यधो विकृष्य एवं स्थिते सति रेखाचतुष्टयं भवति । तत्र बाह्यस्थिते रेखे बाह्यशक्त्यन्तर्गतरेखाश्लिष्टे यथा भवतस्तथा ताभ्यां बाह्यशक्तिं भेदयेत् । तु[8]शब्दो विशेषाभिद्योतको भवति । पुनरपि तामेव शक्तिं प्रसृताश्रिस्थितश्लिष्टरेखाद्वयं तिर्यक्प्रस्तारेण प्रस्तार्य बाह्य[9]शक्तिं भेदयेदिति[10] । अत्रैपाक्षरयोजना— विस्तार्य बाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेदित्ये[11]कमपि वाक्यं प्रयोजनद्वैविध्यवशाद् भेदं[12] कृत्वा योजनीयम् । वि[13]स्तार्य बाह्यशक्तिं भेदयेदिति, चतुर्दशारचक्रस्य द्वादशारसम्पादनावसरे[14] इति यावत् । तु[15]शब्देन पुनरपि सर्वाधस्तादपि बाह्यशक्तिं भेदयेदिति योजनीयम्[16] ॥ ४२ ॥

१. म्योऽष्टौ—क. । २. श्रम—क. । ३. योगी—ख. । ४. यदुक्त—क. ग. छ. । ५ पुर्ण—ख. ङ. ज । ६. प्तिता चक्रस्य—ख. ङ. ज. । ७. सव्याव—घ. । ८. शब्दोऽपि—क. ग. छ. । ९. शक्तिद्वय—ख. ङ. ज., शक्तिमध्य—घ । १०. दित्यर्थ—क. ग. घ. छ. । ११. 'एकमपि भेदयेदिति' नास्ति—ग. छ. । १२. विभेदक—क. ग. घ. । १३. 'विस्तार्य योजनीयम्' नास्ति—ख., 'विस्तार्य विति' नास्ति—ङ. ज. । १४. 'इति यावत' नास्ति—क. ख. ग. घ. छ. । १५. 'तुशब्देन योजनीयम्' नास्ति—ङ. ज. । १६. इत परम्—'चतुर्दशारचक्रस्य द्वादशारसम्पादनावसर इति यावत' इत्यधिक पाठो ङ ज.मातृके विहाय सर्वत्र, स धानाश्रयश ।

1 "तदुक्त सङ्केतपद्धत्याम्—'वशिन्यष्टौ मान्तरालम्' इत्यादिना 'अनाख्या सर्वगा तत' इत्यन्तेन" ( यो० दी० पृ० ८५ ) इत्यमृतानन्दवचनेनेमे श्लोका सङ्केतपद्धतिस्था इति प्रतीयते ।

एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ।
क्लेदनं द्रावणं चैव क्षोभणं मोहनं तथा ॥ ४३ ॥

---

एवमेतदित्यादिभिः पञ्चदशसूत्रैस्त्रैपुरं[1] चक्रराजं[2] स्तौति[3] । एवं "शक्त्या शक्तिम्" ( १।२९ ) इत्यादिना रचितम् । एतत् पुरःप्रसृतम् । महाचक्रम् [4]पश्चिमतनूना [5]सुदुर्लभमित्यर्थः । महाश्रीत्रिपुरामयम् । न केवलमिदं चक्रं मातुरभिव्यक्तिस्थानम्, किन्तु तन्मयम्[6] । यथावत् पूजितं ध्यातं परिभावितं[7]

---

एवं सर्वलक्षणसम्पूर्णं महाचक्रं संपाद्यास्य प्रभावं वक्ति परमशिव एवमेतदित्यारभ्य कल्पकोटिशतैरपीत्यन्तेन श्लोकजालेन[8] । एवमेतत् सृष्टिस्थित्यप्ययात्मना स्थितं चक्रं महाचक्रम् । कोऽर्थः ? सृष्ट्याद्यनुग्रहपर्यन्तकृत्यपञ्चककर्तृ [9]आणवादिमलत्रयभेतृ मायादिरागान्तकञ्चुकपञ्चकभेतृ निवृत्त्यादिशान्त्यतीतान्तकलापञ्चकविगलयितृ मूलादिभ्रूमध्या[10][2]न्तमन्थिद्वादशविगलयितृ[11] [3]व्योमपञ्चकभञ्जयितृ कालाग्न्यादिशिवान्तविश्वधर्तृ[12] अकुलकुलकुलाकुलरश्मिपुञ्जप्रोतमणिगणमहासूत्र[13][14]परापरकुण्डलिनीशक्तिकदम्बरूपं श्रीमहात्रिपुरसुन्दर्याः[15] परममभिव्यक्तियोग्यं[16] दर्पणस्थानीयकमिदं चक्रमित्यर्थः । महाश्रीत्रिपुरा-

---

१. पञ्चभिः सूत्रैः—ख. । २. चक्रं—क. । ३. प्रस्तौति—ख. । ४. अपश्चिम—ग. । ५. न सुरुभ—क., सुलभ—ग. । ६. 'तन्मयं' नास्ति—ख. । ७. भितं—क. । ८. जातेन—ख. ज. । ९. 'आणवादिमलत्रयभेतृ' नास्ति—ख. घ. ङ. ज. । १०. लतान्त—क. घ. । ११. दल—क. ग. घ. छ. । १२. कर्तृं—ख. । १३. 'कुल' नास्ति—क. ख. घ. ङ. ज. । १४. सूति—ख. ङ. । १५. र्याः रूपं पराभि—ख. छ. । १६. 'योग्यं' नास्ति—ख. ङ. ज. ।

1. जन्तोरपश्चिमतनोः सति कर्मसाम्ये⋯कारुण्यतो भवति शाम्भववेधदीक्षा ॥" ( पञ्चस्तव्यां स्पितेऽम्बास्तवे एकादश श्लोकः )। न विद्यते पश्चिमाऽग्रिमा तनुर्यस्य तस्य, अस्मिन्नेव जन्मनि मुच्यमानस्येत्यर्थः । पश्चिमतनवश्च आवागमनशीलाः संसारिणो जीवाः ।
2. माया-रागाव-ब्रह्म विष्णु-रुद्र-ईश्वर-सदाशिव-इन्धिका-दीपिका-बैन्दव-नाद-शक्त्याख्या द्वादशग्रन्थयः "जन्ममूले तु मायाख्यो" (ने. त. ७।२२–२५) इत्यादिना नेत्रतन्त्रापराभिधे मृत्युञ्जयभट्टारके प्रदर्शिताः ।
3. जन्म-नाभि-हृद्-बिन्दु-नादरूपाणां व्योम्नां पञ्चकं "समनन्तं तु जन्माख्यम्" (ने. त. ७।२७–२८) इत्यादिना नेत्रतन्त्र एव प्रदर्शितम् ।

आकर्षणं महादेवि जृम्भनं स्तम्भनं तथा ।
व्याधिदारिद्र्यशमनं सर्वदुर्नीतिनाशनम् ॥ ४४ ॥

हृदि परिरूढमेतच्चक्रं साधकस्य तत्तत्फलाकाङ्क्षया तत्र तत्र तथा तथा भावितं तत्तत्कामं साधयतीत्याह—क्लेदनमित्यादि । क्लेदनं साध्यविषये तत्तत्प्रयोजनानुगुण्येन ध्यातं क्लेदयतीति । एवं द्रावणादयः । जम्भनम्

मर्यमिति । न केवलमभिव्यक्तिस्थानीयमिदं चक्रमित्येतावत्, किन्तु महच्छन्दलक्षितायाः श्रीत्रिपुरायास्त्रिपुरीकृतायाः परं विग्रहरूपमेवेदं चक्रमित्यर्थः । क्लेदनम् । क्लेदयति समस्तं जगदिति क्लेदनम् । कोऽर्थः ? सर्वप्राणिनामन्तश्चिच्चन्द्रमण्डलतया ब्रह्मरन्ध्रान्तः प्रविश्य परामृतास्रावरूपेण शिवादिकालाग्न्यन्तं जगदाह्लादयतीत्यर्थः । पातालादिष्वेवर्तिनीनां सर्वासां सुन्दरीणां विक्षोभकमित्यर्थः । द्रावणं चेति । द्रावयति समस्तं जगदिति द्रावणम् । ब्रह्माण्डकुहरान्तश्चारिपरितप्तानुमाख्यजीवराशीनां कल्याणदेशिककटाक्षवीक्षणवशात् कालानलमाविश्य दक्षिणावर्तवातचक्रविक्षोभवशात् तडित्कोटिज्वालाजटिलमहाकुण्डलीवलयपरिवेष्टितोर्ध्वमार्गचटुलचारचतुरमाब्रह्मविलोकनोत्सुकमिदं चक्रं निखिलपाशजालं द्रावयति विलापयतीत्यर्थः । अथवा समस्तसुरासुरसुन्दरीमदनमन्दिरान्तः परिचिन्तितमिदं चक्रं द्रावयतीति । कोऽर्थः ? मदनमन्दिरारविन्दस्यन्दिमकरन्दमहामदवारिसरित्प्रवाहप्रवर्तकमिदं चक्रमित्यर्थः । क्षोभणं चेति । क्षोभयति समस्तं जगदिति क्षोभणम् । समस्तसुरासुरयक्षराक्षसगन्धर्वाप्सरोगणब्रह्मविष्णुरुद्रेश्वरसदाशिवादिपरिपूरितमिदं दहराकाशकुशेशयकोटरान्तःप्रस्फुरन्महाचक्रकीलानलप्रभोच्छटानिबिडीकृतदक्षिणावर्तवातचक्रप्रक्षोभितं स्वान्तश्चिन्त्यमानं

१. जृम्भणं-वाम. के. । २. दुःख्याति-अ. सख., दुर्गति-सक. । ३. कर्म-ख. ग. । ४. 'क्लेदन' नास्ति-ख. । ५. वाग्भवविषये-ख. । ६. 'इत्येतावत्' नास्ति-क. ग. घ. ज. । ७. महात्रिपुरसुन्दर्या-ख. ङ. ज. । ८. परा-घ. । ९. 'कोऽर्थः' नास्ति- क. ग. छ. । १०. ष्वन्तर्वर्तिनी-ख. घ. ङ. ज. । ११. 'द्रावयति' नास्ति-क. ग. छ. । १२. 'परि' नास्ति-क. ग. । १३. तमूर्ध्वं-ख. घ. ङ. ज. । १४. चतुरस्रा-ग. छ. । १५. प्राणिपाश-क. ग. छ. । १६. 'मदन' नास्ति-क. ग. छ. । १७. 'सरित्' नास्ति-क. छ. । १८. क्षोभण संक्षोभणम्-ख. ङ. ज. । १९. 'विष्णु' नास्ति-ख. छ. । २०. 'प्र' नास्ति-क. ग. छ. । २१. ज्वाला-ख. ङ. ज. । २२. 'प्रभा' नास्ति-ख. ङ. ज. ।

आवर्जनम्। स्तम्भनं निश्चेष्टीकरणम्। व्याधिदारिद्र्यशमनमिति[2]। व्याधि-रपूर्णम्मन्यतात्मा संकोचः। दारिद्र्यम् अज्ञानम्। यदाह[3] भट्टगङ्गाधरमिश्रः[4]—

अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः।
क्लेशावहो[5] जुगुप्सश्च[6] सर्वधर्मबहिष्कृतः॥
आनन्दकणभिक्षार्थं[7] शब्दस्पर्शादिपक्षणे[8]।
अटत्यविरतं येन तद्दारिद्र्यं विदुर्बुधाः॥ इति।

---

जगत् क्षोभयतीत्यर्थः। आकुलं करोतीति यावत्। मोहनं तथेति। पूर्वोक्तदहराकाशान्तश्चक्रमध्यवह्निसन्तापशिथिलीकृत[9]मनोवारणानां साध्यवृन्दानां[10] मोहनं भवति। परवशीभावं[11] नयति स्वमध्यस्थानित्यर्थः॥ ४३[1]॥

आकर्षणमिति। चक्रमध्यस्थितत्वेन चिन्तितमाकर्षयति। स्तम्भमावर्जनम्। स्तम्भनं निश्चेष्टीकरणम्। व्याधिदारिद्र्यशमनमिति। व्याधिः स्वरूपापरिज्ञानम्, तन्मूलत्वाद्बाह्याभ्यन्तरक्लेशानाम्। दारिद्र्यं स्वस्वरूपालाभः[12]। शमनं स्वविमर्शपराहन्तेश्वर[13]स्वरूपोल्लासप्रदर्शनेन परिपूर्णपराद्वयानन्दात्मप्रकाशनेन[14] च[15]। तदुभयं प्रणाशयतीदं चक्रमित्यर्थः। अथवा[16] व्याधयो राजयक्ष्मादयः, दारिद्र्यं रिक्तता, तदुभयमपि[17] स्मृतिमात्रेण प्रणाशयतीदं[18] चक्रमित्यर्थः। सर्वदुःखार्तिनाशनमिति। अतीतानन्तजन्मोपात्तकल्मषवशादेकमपि दुःखं बहुधा भवति[19], अर्थपुत्रकलत्रलोभनिमित्तवशात्। तस्य सर्वदुःखस्य नाशनं तत्तदिष्टार्थ[20]प्रकृष्टसम्पत्प्रदानेनेति। आर्तिरिति क्लेशः, आध्यात्मिकाधिदैविकाधिभौतिकत्रिविधोऽपि। आध्यात्मिकस्तु वायुपित्तश्लेष्मादीनां प्रकोपसंभवः। आधिदैविकस्त्वतिवृष्ट्यादिदेवताप्रकोपसंभवः[22]। आधिभौतिकश्चौरव्याघ्राप-[23]

---

१. ष्टित–ग.। २. व्याधिरित्यपूर्णम्मन्यतात्मकसंकोचः–ख.। ३. 'यदाह…मिश्र.' नास्ति–ख.। ४. गङ्गाधर–ग.। ५. निवेशनम्–ख. ग.। ६. होऽतिकष्टश्च–ग. दी.। ७. एषा च–दी.। ८. णम्–क.। ९. 'कृत' नास्ति–क. ग. छ.। १०. वृन्दारकाणां–क. ग. छ.। ११. परमशिव–ख. ङ. ज.। १२. भाव.–ख. ङ. ज.। १३. स्वाधीनत्वं–क. ग. छ.। १४. परात्माहन्ता–ख. ङ. ज.। १५. 'च' नास्ति–ख. ङ. ज.। १६. 'अथवा…मित्यर्थः' नास्ति–ग.। १७. 'मपि' नास्ति–क. ग. छ.। १८. प्रदर्श–क. ग. छ., प्रशाम–घ.। १९. तीत्यर्थः। पुत्र–घ.। २०. ष्टार्थ–ख. ङ. ज.। २१. यात–ङ. ज.। २२. स्त्ववृष्ट्या–क. ग. छ., स्तु परमेश्वरा–ख. ङ. ज.। २३. कस्तु अपस्मारा–ख. घ. ङ. ज.।

**शान्तिपुष्टिधनारोग्यमन्त्रसिद्धिकरं परम् ।**
**भोगदं मोक्षदं चैव खेचरत्वप्रवर्तकम् ॥ ४५ ॥**

---

सर्वदुर्नीतिनाशनम् । सर्वासां दुर्नीतीनां नाशनम् । उपासकान् सन्मार्गे स्थापयतीति भावः । यच्छ्रुतिः—"सुनीतिभिर्नयसि त्रायसे जनम्" ( ऋ० २।२३।४ ) इति ॥ ४३-४४ ॥

शान्तीति । अत्र करशब्दः प्रत्येकमभिसम्बद्धयते । शान्तिकर-मित्यादि । परं सर्वोत्कृष्टम् । भोगदं भोगार्थिनाम् । भोगश्चमत्कारः । मोक्षदं मोक्षार्थिनाम् । चित्तकल्मषनिवृत्तिद्वारेण ज्ञानं प्रयच्छतीति भावः ।

---

स्मारादिभूतप्रकोपमभवः । एषं त्रिविधानामप्यार्तीनां स्मृतिमात्रेण प्रशमं करोतीदं चक्रमित्यर्थः ॥ ४४ ॥

शान्तिपुष्टिधनारोग्येति । शान्तिकरं समस्तविघ्नोपद्रवप्रशमकरमित्यर्थः । पुष्टि-रिति समस्तसम्पत्समृद्धिः, तामप्यस्मै साधकाय ददातीति पुष्टिकरम् । अर्थानां सञ्चयो धनम्, तदस्मै ददातीति धनकरम् । आरोग्यं जाठरजातवेदसो दीपनादिद्वारेण देहपीडा-भावं, तं करोतीत्यारोग्यकरम् । मन्त्रसिद्धिकरं मन्त्राणां सिद्धिर्मन्त्रसिद्धिस्तां करोतीति मन्त्रसिद्धिकरम् । मन्त्रा आणवाद्युपायसर्वेन्धिनस्तेषां सिद्धिः शक्तिचक्रोच्चारणेनैव संभवति नान्यथेत्यर्थः । तथा चोक्तं श्रीमतोत्तरषट्केऽपि—

> यद्यदुच्चरते मन्त्री मन्त्रवर्णं शुभाशुभम् ।
> तत्तत्सिद्धयति देवेशि योनिमुद्रानिबन्धनात् ॥ इति ।

भोगदं भोगं ददातीति भोगदम् । भोगस्तु द्विविधः—ऐहिकः, आमुष्मिकः इति । ऐहि-कस्तु स्रक्चन्दनवनितादिः । आमुष्मिकस्तु नन्दनोद्यानमध्यस्थितकेलिशैलदरीषु सरभसमदनमददक्षवेणुवीणामृदङ्गकाहलादिदिव्यध्वनिपरिबृंहिततुम्बरुनारदप्रमुखसिद्ध-

१. स्मा—ख । २ पुनिश्च—क । ३. गव—ग । ४. मतुर—ग । ५. पालव—ग. घ. ङ । ६. तात्पर्य—ख. ग. छ । ७. त क—ख. घ. ङ. ज. । ८. 'मन्त्रसिद्धिकर' नास्ति—क ग. छ. ज । ९ गमता—क ग छ. । १०. सर्वेन्ध—क. ग. घ. ङ. [illegible] ज. । ११. देवेश—ग, योग हि—घ । १२ भोगदमिति—क. ग. [illegible] । १३. 'स्तु' नास्ति—क. ग. । १४. राग्य—ग. ङ. । १५. पर—ग. घ. ङ. ज. । १६ पुष्ट—क. ग छ. ।

सर्वरक्षाकरं देवि सर्वानन्दकरं तथा ।
सर्वकर्मकरं चापि सर्वकार्यार्थसाधकम्[4] ॥ ४६ ॥

---

खेचरत्वप्रवर्तकं विद्याधरा[5]द्याधिपत्यप्रवर्तकम् । सर्वरक्षाकरं शस्त्रसलिलाग्नि[6]-राजचोरवातादिभ्यः सर्वेभ्यः । सर्वानन्दकरं तत्तद्भुवनतत्तदाधिपत्यद्वारेण । सर्वकर्मकरं वश्यादीनि कर्माणि साधकस्य करोति[8] । सर्वकार्यार्थसाधकं

---

गन्धर्वोपगीयमानदिव्यगीत[9]परि[10]पूरितश्रवणविवराभिर्नवनवप्रवृद्धरागसागरनिमग्नमानसाभिः प्रियजनहृदयविदारणप्रवीणनिशितकुसुमशरसदृशनयननलिनाभिः कलरणित[11]मणिगणाद्यनेका[12]कल्पकल्पितालङ्कारललिततनुलताभिरमरविला[13]सिनीभिरविरतविनोदनम् । एत[14]दुभयं स्मृतिमात्रेण ददाति । ऐहिकामुष्मिकनिरीहचेतसः परमयोगिनः पुनः[15] पञ्चशक्तिचतुर्वह्न्यात्मकदेहमहापीठे प्रकाशविमर्शमयीं[16] परमानन्दलक्षणां स्वात्मदेवतां त्रिपुरसुन्दरीमनुसन्दधानस्य परमशिवसामरस्यपरमभोगं प्रयच्छतीत्यर्थः । मोक्षदं[17] चेति । जीवन्मुक्तिं प्रयच्छतीत्यर्थः । इदन्ताभरितस्य कृत्रिमाहंस्वरूपस्य जीवत एव ज्ञातृकर्तृस्वभावपराहंभाव[18]भावनात्मकविमर्शानन्दलक्षणस्वस्वरूपाभिव्यक्तिं करोतीत्यर्थः । खेचरत्वप्रवर्तकमिति । खे चिन्मये पराकाशे तत्र चारित्वं समरसता खेचरत्वम् । अथवाऽणिमाद्यष्टसिद्धिसमन्वितः सदा सृष्ट्यादिपञ्चकृत्यकारी स्वेच्छा[19]गृहीतविग्रहः स्वच्छन्दचारी महाभैरवदशामापन्नः खेचरीभिरेवंगुणविशिष्टाभिश्चतुष्षष्टियोगिनीभिः संचरन्[20] क्रीडमानः खेचर इत्यु[21]च्यते । तथात्वप्रवर्तकमिति यावत् ॥ ४५ ॥

सर्व[22]रक्षाकरं चेति । सर्वतः शस्त्रवह्निरोगादिभ्यः स्मर्तुः साधकस्य रक्षां करोतीत्यर्थः । अथवा [1]सर्वेषां समयनिष्ठानां समयच्युतिसंभयाद्यनिष्टेभ्यो रक्षतीति यावत् ।

---

१. धेय—सस. । २. परम्—ब. । ३. देवि—सक. । ४. मम्—सघ. । ५. राधि—क. स. । ६. ग्निवातराजचोरादि—ख. ग. । ७. दिक—क. । ८. करोनोति—ख. ग. । ९. गीति—ख. ट. । १०. 'परि' नास्ति—क. ग. । ११. मणित—ज. घ. । १२. 'आकल्प' नास्ति—क. ग. छ. । १३. निधा—ख. ज. । १४. एवम्—ङ. । १५. 'पुनः' नास्ति—ख. ङ. ज. । १६. मयीमात्मदेवतां त्रिपुर—ख. ग. छ. । १७. 'मोक्षदं…तीत्यर्थः' नास्ति—ख. ग. घ. छ. । १८. हंभावात्मक—ग. ट. । १९. 'स्वेच्छा…चारी' नास्ति—ख. ट. ज. । २०. संक्रीडमानः—ख. ग. छ. । २१. 'इति' नास्ति—ख. ग. घ. छ. । २२. 'सर्व…रक्षतीति यावत्' नास्ति—ख. ट. ज. ।

1. सर्वेषामिति । सर्वेषामिति षष्ठ्यर्थस्य संबन्धस्यानिष्टेष्वन्वयः । सर्वदा समयनिष्ठानां समयच्युतिसंभयादीनि यान्यनिष्टानि तेभ्यो रक्षतीति यावत् ।

सर्वावेशकरं देवि सर्वश्रेयस्करं परम् ।
सर्वमन्त्रमयं देवि सर्वयोगेश्वरीमयम् ॥ ४७ ॥
सर्वपीठमयं देवि सर्ववेधकरं पुनः ।

---

यत्कर्तव्यमर्थ्यं च तस्य सर्वस्य साधकमित्यर्थः । सर्वावेशकरं साधकसमीहितसर्वावेशकरम् । सर्वश्रेयस्करं सर्वस्य श्रेयसः कारकम् । परम् अनुपमम् । सर्वमन्त्रमयं पूर्णाहन्तासारत्वात् । सर्वयोगेश्वरीमयं महाशक्त्यधिष्ठानत्वात्,

---

सर्वानन्दकर तथेति । सर्वेषामानन्दकरम् । अयमर्थः—ब्रह्मरन्ध्रसहस्राराम्बुजोदरगतमेतन्मौलिकापीठे परमानन्दामृतपूर्णे शरीराधारनाड्यधिष्ठितानां चतुष्षष्टिलक्षकोटिप्रभृतियोगिनीनां सर्वासां कुलदेवीनामविरतवर्षत्परामृतवर्षधाराप्लावितानां परमसमावेशकरमित्यर्थः । सर्वकर्मकर चापीति । शिवशक्त्यात्मकं चक्रं प्राणापानात्मनाऽन्तः करणबहिष्करणात्मना च प्रविश्य वचनादानगमनोत्सर्गानन्दात्मकं श्रवणस्पर्शनादिकं च करोतीति यावत् । अथवा वश्याकृष्ट्यादिसर्वकर्मकरं चेत्यर्थः । सर्वकार्यार्थसाधकमिति । कार्यं कर्तव्यम् । अर्थः पुरुषार्थः । कर्तव्यतयाऽभिप्रेतपुरुषार्थानां सकलानां साधकमिदं चक्रमित्यर्थः ॥ ४६ ॥

सर्वावेशकरमिति । सर्वेषामावेशकरं सर्वेषां भूतप्रेतपिशाचादीनां दुष्टचेतसां दर्शनमात्रेणावेशकरं महाभयोत्पादनद्वारेण कम्पकरमिदं चक्रमित्यर्थः । सर्ववेधकर

---

१. देश–ख. । २. 'सर्वश्रेयस्कर परम्' इत्यत पूर्वं 'सर्ववेधकरम्' इत्यादि 'सर्वार्थसयुत चैव' इत्यन्त ४८-४९ श्लोकस्थो भागो वर्तते–चाक ख. ग. से. अ । ३. 'सर्वयोगेश्वरीमयम्' इत्यत पूर्वं 'सर्वतीर्थमय पुन' इत्यादि 'सर्वोन्मादकर देवि' इत्यन्त ४९–५० श्लोकस्थो भागो वर्तते–चाक. ख. ग. । ४. चैव–अ. ख. सभ. घ । ५. बोध–सक. । ६. परम्–चाग. ख से. । ७. मर्यश्च–क. । ८. धमृ–क. । ९. गोष्ठ–क. । १०. सर्वानन्दकरमित्ययं–क. ग. छ. । ११. मन्त्रमातृका–घ. । १२. पीठ–क. ग. । १३. पूर–ख. घ. ङ. ज. । १४. रधारणाद्य–क. ग. छ. ज । १५. प्लावितानां–क. ग. छ. । १६. 'च' नास्ति–क. ग. छ. । १७. नविसर्गा–क. ग. छ. । १८. दि कर्म करो–क. ग. घ. छ. । १९. नमिति–ख. घ. ङ. ज । २०. ध्यमिति–क. ग. छ., अर्थसाधनम् अर्थं पुरुषार्थं, तत्साधनम्–घ. । २१. 'इद' नास्ति–क. ग. घ. छ. । २२. 'सर्वेषामावेशकर' नास्ति–क ग. छ. ज ।

सर्वतत्त्वमयं देवि सर्वाज्ञानिलयं तथा ॥ ४८ ॥
सर्वार्थसंयुतं चैव सर्वज्ञानमयं प्रिये ।

"चतुष्पष्टियंतः" ( ४।५७ ) इत्युक्त्वाच । सर्वपीठमयं विश्वकारणोपलब्धि-
स्थानत्वात् । सर्ववेधकरमिति । अयमर्थः—

उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः ।
यो भवेत् स समावेशः सम्यगाणव उच्यते ॥
उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥
अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः ।
उत्पद्यते य आवेशः शाम्भवः स उदाहृतः ॥ (२।२१-२३)

इति श्रीमालिनीविजयोत्तरनिर्णीतदिशा आणवशाक्तशाम्भवसमावेश-
रूपं वेधं करोतीति । सर्वतत्त्वमयं महासंविदाधारत्वात् तदुल्लासितपद्-

परमिति । आणवशाक्तशाम्भवप्रकारेण त्रिविधो वेधः । तस्य सर्वस्य कारकमिदं चक्र-
मित्यर्थः । सर्वतत्त्वमयं देवीति । सर्वेषां तत्त्वानामात्मविद्याशिवतत्त्वान्तर्भूतानां समुदाय-
स्वरूपमिदं चक्रमित्यर्थः । सर्वज्ञानप्रदं तथेति । सर्वेषां प्राणिनामन्तः प्रविश्य तत्तच्छ्रोत्रादि-
घ्राणान्तेन्द्रियमुखेनात्मशक्त्युपोद्बलितेन शब्दादिगन्धान्तानामर्थानां विषयभूतानां
ज्ञानानि तेषां ददात्यनुग्रहीतुमिच्छयेदं चक्रमित्यर्थः । अथवा सकलशास्त्रतत्त्वज्ञानं
ददातीति सर्वज्ञानप्रदम् । सर्वर्द्धिप्रदं चेति । सर्वासामृद्धीनां प्रदं सर्वर्द्धिप्रदम् ।

१. करं—शाक. ख. । २. चापि—सप. । ३. सर्वज्ञानप्रदं—वाग. अ. से. सक., सर्वज्ञानालयं—ज., सर्वज्ञानमयं—सस. । ४. सर्वार्थसंयुतं—शाक. ख., सर्वसिद्धिप्रदं—वाग. से. सद्र., सर्वर्द्धिप्रदं चेति—अ. । ५. चापि—सस. । ६. तथा—सप. । ७. 'चतु···स्याच्च' नास्ति—ख. । ८. भट्टपीठाधिष्ठानत्वात्—ख. । ९. 'अयमर्थः' नास्ति—ख. । १०. धित·—क. ग. । ११. बोऽस्मायुदीरितः—ख. ग. । १२. विद्यानाम्—क. ग. छ. । १३. रूपं चक्रम्—क. ग. घ. छ. । १४. मतानां विषयाणां—क. ग. छ. । १५. गृहीत—क. ख. घ. छ. । १६. 'इत्यर्थः' नास्ति—क. ग. छ. । १७. 'सर्वज्ञानप्रदम्' नास्ति—क. ग. घ. छ. । १८. सिद्धि—ख. घ. ङ. ज. । १९. सर्वासां सिद्धीनां प्रदं सर्वसिद्धिप्रदम्—ख. ज., नास्ति—क. ग. छ. ।

**सर्ववेदमयं देवि सर्वतीर्थमयं पुनः ॥ ४९ ॥**

-त्रिंशत्तत्त्वमयम्। सर्वाज्ञानिलयम्[2]। आज्ञा शास्त्राणि, तेषां निलयः[3] कोश-गृहम्। उक्तं च—"श्रुतिस्मृती ममैवाज्ञे" इति। सर्वान्वयोत्पत्तिभूमिमहा-शक्त्यधिष्ठानमित्यर्थः। सर्वार्थसंयुतं सर्वप्रयोजनसंयुतम्। सर्वज्ञानमयम् एतदुपासनेन सर्वज्ञत्वसिद्धिरित्यर्थः। वेदमयं वेदेषु यत्फलं तदस्तीति।

---

पुत्रमित्रकलत्रविस्तररत्नगजतुरगपशुदासदासीगृहगृहोपकरणगुणवृत्तशीलदाक्षिण्यसौन्दर्य-विचित्रभूषणादीनामृद्धिमुन्नतिमन्वहं ददाति स्मरणमात्रेणेदं चक्रमित्यर्थः। सर्वश्रेयस्करं परमिति। सर्वेषां श्रेयसां करं सर्वश्रेयस्करम्। योगान्तरायभूतानामर्वाचीनसिद्धपुप-सिद्धयाख्यश्रेयसां सर्वेषां स्मरणमात्रेण संपादकमिदं चक्रमित्यर्थः। सर्वमन्त्रमयं देवीति। वर्णाध्वसंभवा ये सप्तकोटिमहामन्त्रास्तेऽपि चिच्छक्त्युल्लासात्मकतामाश्रित्य दीपिताः सर्वकामफलप्रदा भवन्तीत्यतः सर्वमन्त्रमयमिदं चक्रमित्यर्थः। सर्वयोगेश्वरीमयमिति। गगनस्वर्गमर्त्यपातालनागाख्यपञ्चस्थलेषु श्रीकण्ठानन्तशङ्करपिङ्गलसादाख्याः पञ्च नाथा अधिकारिणः। तत्परिमहाश्चतुष्पष्टिलक्षकोटि-द्वात्रिंशल्लक्षकोटि-षोडशलक्षकोटि-अष्ट-लक्षकोटि-चतुर्लक्षकोटिडाकिन्यादिहाकिन्यन्तषड्योगिन्यंशभूतानां समस्तयोगेश्वरीणां स्वरूपं समस्तयोगिनीवृन्दविग्रहमिदं चक्रमित्यर्थः। सर्वपीठमयं चैवेति। सर्वपीठानि चतुष्षष्टिसंख्याकानि। [1]पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्रपीठेशपीठेशीक्षेत्रपाल-वटुकगणेशादिसहितं सर्वमेवोध्युष्टयोगपीठान्तर्भूतम्। तादृशयोगपीठमयमिदं चक्रमित्यर्थः। सर्वज्ञानमयं प्रिये। इति। अकुलकुलकुलाकुलकौलशुद्धकौलाख्यकुल-पञ्चकशास्त्रप्रतिपाद्यतत्त्वज्ञानमयमिदं चक्रमित्यर्थः। सर्वदोषहरं प्रिये। इति। दोषा

---

१. देवमयं—वाम. ध., दोषहरं—वाम. भ. से.। २. यं तथा—ख.। ३. निलयं—ग.। ४. इयो—ग.। ५. सर्ववेद—ख.। ६. 'गृह' नास्ति—क. ख. ग. छ.। ७. 'आदि' नास्ति—क. ग. छ.। ८. 'श्रेयसां करं सर्वश्रेयस्करम्' नास्ति—क. ग. छ.। ९. 'सर्वेषां' नास्ति—क. ग. छ.। १०. 'इदं चक्रमित्यर्थः' नास्ति—क. ग. छ.। ११. 'सर्व⋯मन्त्रमयमिदं चक्रमित्यर्थः' नास्ति—ख. ङ. च.। १२. भवन्तत्या इत्यतः—क. ख. ग. छ.। १३. 'इदं चक्रं' नास्ति—क. ग. छ.। १४. विषसंख्यानि—ख. ङ. च.। १५. मेवं देव्याद्यष्टयोग—ख. ङ. ज.। १६. मयमित्यर्थं—क. ग. छ.।

1. पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्राणि तन्त्रालोके (१५।८४-९२) तट्टीकायां च द्रष्टव्यानि।

सर्व[५]व्रतमयं चैव सर्वामृतमयं तथा ।
सर्वदुः[६]खप्रशमनं सर्वशोकनिवारणम् ॥ ५० ॥

[४]तीर्थमयं गङ्गादिषु यत्पुण्यं तदत्रेति । व्रतमयं कृच्छ्रादिषु य[६]त्फलं तदत्रेति । सर्वामृतमयम्[1] । यद्यदनिष्टं तत्तन्मृत्युरूपम्, तस्य सर्वस्य प्रत्यनीकमिदं चक्रमित्यर्थः । दुःखप्रशमनम् आध्यात्मिकादिदुःखानां प्रशमनम्[७] । [८]शोकनिवारणम् इष्टविषयवियोगजानां शोकानां निवारणम् । अयं भावः—सवासनस्य चक्रराजस्योपासनेन सर्वविषयसङ्गहेतुभूताज्ञाननिवर्तकमात्मज्ञानमुदेति । यदुपनिषत्—"सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् । श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयतु" ( छा० उ० ७।१।३ ) इत्युपक्रम्य "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय ( देवर्षये नारदाय ) तमसस्पारं दर्शयति भगवान् सनत्कुमारः" ( छा० उ० ७।२६।२ ) इति चोपसंहरति ।

---

ब्रह्महत्यादयस्तान् स्मरणमात्रेण [१०]नाशयतीदं चक्रमित्यर्थः । सर्वतीर्थमयं [११]पुनरिति । [१२]सर्वासां शुद्धीनां [१३]सर्वतीर्थशब्दोपलक्षितानां स्वरूपमिदं चक्रमित्यर्थः ।

सर्वामृतमयं तथेति । मृत्युपाशपाशितानां [१४]सर्वप्राणिनाममृतमयं मृत्युपाशजालमोचनकरमिदं[१५] चक्रमित्यर्थः । [१६]सर्वदुःखप्रशमनमिति । सर्वेषां मानसानामाधिसंभवानां दुःखानां प्रशमनमिदं चक्रमित्यर्थः । सर्वशोकनिवारणमिति[१७] सर्वेषां पुत्रमित्रकलत्रादिवियोगजानां शोकानां[१८] निवारणमिदं [१९]चक्रमित्यर्थः ॥ ४७-५० ॥

---

१. तत्त्व—सख. । २. देवि—सख. । ३. दुष्ट—सघ. । ४. सर्वतीर्थ—ख. । ५. सर्वव्रत—ख. । ६. यत्पुण्यं—क. । ७. नमिति—क. । ८. सर्वशोक—ख. । ९. तंन—ख. । १०. नाशयतीति—क. ग. घ. छ. । ११. 'पुनः' नास्ति—क. ग. घ. छ. । १२. सर्वशुद्धीनां—क. ग. घ. छ. । १३. 'सर्व' नास्ति—ख. ङ. ज. । १४. सर्वप्राणिनां' नास्ति—क. घ. । १५. 'इदं चक्रमित्यर्थः' नास्ति—क. ग. छ. । १६. 'सर्व…प्रशमनमिदं चक्रमित्यर्थः' नास्ति—क. ग. छ. । १७. 'इति' नास्ति—क. ग. छ. । १८. 'शोकानां' नास्ति—क. ग. छ. । १९. 'इदं चक्रमित्यर्थः' नास्ति—क. घ. छ. ।

1. "सर्वामृतमयं पञ्चविधमोक्षावहम् । मृतमनिष्टं तन्निवारकमिति केचित्" ( से. पृ. ४२ ) ।

सर्वोन्मादकरं देवि सर्वाह्लादन[1]कारकम् ।
सर्व[2]दौर्भाग्यशमनं सर्वविघ्ननिवारणम् ॥ ५१ ॥
सर्व[3]सिद्धिकरं चक्रं सर्वाशापरिपूरकम्[4] ।
रौद्राभिचारकोदण्ड[5]परमन्त्रौघभक्षणम्[6] ॥ ५२ ॥

सर्वोन्मादकरम् । उन्मादो विभ्रमः, लोकोत्तरो विलास इत्यर्थः । सर्वाह्लादनकारकं महानन्दहेतुत्वात् । दौर्भाग्यम् अस्पृहणीयता । विघ्नः प्रस्तुतहन्ता । सिद्धिरणिमाद्या विभूतिः । रौद्रेति । रौद्राः क्रूराः । अभिचारका हिंसितारः ।

सर्वोन्मादकरं चेति । सर्वासां सुन्दरीणां कन्दर्पदर्पजन्यप्रेमगर्भोपबृंहितकृत्याकृत्यापरिज्ञानेनोन्मत्तवत् स्वात्मवृत्तानभिज्ञानप्रायः कोऽप्यान्तरो भाव उन्मादः । साधकार्थे तमेवार्थयुक्तं करोतीदं चक्रमित्यर्थः । सर्वाह्लादकर तथेति । सर्वेषामाह्लादकरं सर्वाह्लादकरम् । सर्वेषां संसारतापपरितप्तचित्तानां देशिकेन्द्रपादोपसर्पणसंलब्धचक्रविभवानां स्वपिन्यासपरिज्ञानमात्रेण संसारतापप्रशमनद्वारेणाह्लादकरम् आह्लादं जनयतीदं चक्रमित्यर्थः । सर्वदौर्भाग्यशमनमिति । दौर्भाग्यं दुर्भगत्वं सकललोकपरिहासविषयत्वम् । तच्छमयतीदं चक्रमित्यर्थः । सर्वविघ्ननिवारणमिति । सर्वेषां योगान्तरायभूतानां विघ्नानां निवारणमित्यर्थः । सर्वसिद्धिप्रदमिति । सर्वासामणिमादीनां सिद्धीनां साधकमिदमित्यर्थः । सर्वाशापरिपूरकमिति । सर्वेषां मनोरथानां परिपूरकं साधकमिदं चक्रमित्यर्थः ।

१. सर्वदोषहर–च सध. । २. कर तथा–अ., कारणम्–सख. घ. । ३. नास्त्येषा पङ्क्तिः –सख. । ४. विनाशनम्–सघ. । ५. त्रैलोक्यमोहन–सख. । ६. प्रद–खाग. से. अ. सक. । ७. 'सर्वाशापरिपूरकम्' इत्यत परम् 'सर्वसंक्षोभकं चैव सर्वसौभाग्यदायकम् । सर्वार्थसाधकं चक्र सर्वरक्षाकर तथा ॥ सर्वरोगहर चक्र सर्वसिद्धिप्रद तथा । सर्वानन्दमय देवि नवम चक्रनायकम् ॥' इति द्वौ श्लोकावधिकौ स्तः–सख. । ८. 'रौद्राभिचार' इत्यादि 'स्तम्भकरं परम्' इत्यन्त श्लोकद्वय नास्ति–सख. । ९. कोच्चण्ड–खाक. ख., कोदण्ड–खाग. से. सघ., कोदण्ड–क. सच. घ. । १०. परम त्रंवलक्षणम्–सघ. । ११. कम्–खाक. ख. ग. । १२. सर्वदौ–ख. । १३. विघ्नप्रस्तुता–क. । १४. तदर्थं–क. ग. घ. छ. । १५. 'सर्वेषां ··ह्लादकरम्' नास्ति–ग. । १६. सर्वसंकल–ख. ङ. च. । १७. विभागानां–क. ख. ग. छ. । १८. मनोरथम्.–क. ग. छ. । १९. सर्व–क. ग. छ. । २०. योग्यपर्थं –क. ग. छ. । २१. सर्वरोगा–क. ग. घ., सर्वभोगा–छ. । २२. 'इद' नास्ति–क. ख. ग. ङ. छ. ज. । २३. 'साधकमिद चक्रमित्यर्थः' नास्ति–क. ग. छ. ।

परसिद्ध्याकर्षणं च पराज्ञाकर्षणं तथा ।
परसैन्यस्तम्भकरं परविज्ञानमोहनम् ॥ ५३ ॥
परचक्रस्तम्भकरं शास्त्रस्तम्भकरं परम् ।
महाचमत्कारकरं महाबुद्धिप्रवर्तकम् ॥ ५४ ॥

---

अत एवोद्दण्डा उन्मार्गाः । परे शत्रवः । तेषां मन्त्रौघो मन्त्रराशिः । तस्य भक्षणम् । [11]अक्रमोपासकानामयथादेवताज्ञानानां मन्त्रग्रामघस्मरमिदं चक्रमिति भावः । महाचमत्कारकरम् । [1]अनेडमूकानामपि हस्तमस्तकसंयोगात्

---

रौद्राभिचारकोद्दण्डपरमन्त्रौघभक्षणमिति । परैः शत्रुभिः साधकध्वंसमाशंसमानैरभिचाराय प्रयुक्ता ये मन्त्रास्ते [12]रौद्रा निर्घृणाः, उद्दण्डा नृशंसाः, तान् [13]मन्त्रान् [14]भक्षयति तत्सामर्थ्य[15]मुपसंहरतीदं चक्रमित्यर्थः ॥ ५१-५२ ॥

परसिद्ध्याकर्षणं चेति । पराः प्रतिस्पर्द्धिनो ये सिद्धाः शात्रवं गता मारणादिक्रियानिपुणाः क्षुद्रसिद्धिसम्पन्नास्तेषां सिद्धिं साधकेन स्वचक्रमध्यस्थिततया चिन्ति[16]तां तामाकर्षयतीदं चक्रमित्यर्थः । पराज्ञाकर्षणं तथेति । परेषामन्येषां प्रतिस्पर्द्धिनामाज्ञां निग्रहानुग्रहकरीमपि चक्रवैश्वानरपरित[17]प्ततया चिन्तितामाकर्षयतीदं चक्रमित्यर्थः । [18]परसैन्यस्तम्भकरमिति । परेषां शत्रूणां सैन्यं स्तम्भयतीदं चक्रमित्यर्थः । स्तम्भनप्रकारश्च [2]प्रयोगप्रकरणे तदवसरे भणितव्यः । परविज्ञानमोहनमिति । परेषामन्येषां वि[19]ज्ञानं तस्य मोहनं तस्य प्रमोष[20]करं चक्रमित्यर्थः ॥ ५३ ॥

---

१. ज्ञा-सघ. । २. कं च-वाक. ख. ग. । ३. ज्ञानवि-सघ. । ४. चक्र-वाक. ख. । ५. कं च-वाक. ख., नं च-सघ. । ६. नकं-वाक. ख. ग. । ७. तथा-से. । ८. महत्कार-वाग. । ९. भुक्ति-वाक. ख. अ., भक्ति-अ. सघ., मुक्ति-सक. । १०. वर्ध-सख. । ११. अयं भावः-अक्र···चक्रमिति-ख. । १२. 'ते' नास्ति-क. ग. घ. छ. ज. । १३. 'मन्त्रान्' नास्ति-क. ग. छ. । १४. जयति-क. ग. छ. । १५. मपहरतीत्यर्थः-क. ग., मपहन्तीत्यर्थः-छ. । १६. चिन्तितानां कर्ष-क. ग. घ. छ. । १७. तप्ता या चिन्तिता ता-ख. ङ. ज. । १८. 'पर··· स्तम्भयतीदं चक्रमित्यर्थः' नास्ति-ख. । १९. ज्ञानस्य-क. ग. छ. । २०. चक्रमिति-क. ग. छ. ।

1. अनेडमूकानामपीति । "भगवत्पादैरनेडमूकेभ्यो लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्नाऽवाचि" (लक्ष्मीधरा, पृ. २८१) ।
2. प्रयोगप्रकरण इति । द्वितीये प्रयोगाख्ये पटले ६७ इत्यादिश्लोकेषु स्तम्भनप्रकारो दृश्यते ।

[ महावाणीकरं देवि महासौभाग्यदायकम् ।
महावश्यकरं देवि महासौभाग्यदायकम् ॥ ]
महाज्वरहरं देवि महाविषहरं परम् ।
महामृत्युप्रशमनं महाभयविनाशकम् ॥ ५५ ॥

सारस्वताद्यावेशकरमित्यर्थः । महाबुद्धिप्रवर्तकम् अव्युत्पन्नानामपि वेदशास्त्राद्युपन्यासकरम् । महावाणीकरम् अशिक्षितैकपदप्रयोगनिपुणानामपि महाकाव्यकर्तृताकरमित्यर्थः । महासौभाग्यं सर्वस्पृहणीयता । महाज्वरोऽप्यभिचारादिकृतः । महामृत्युः कालग्रासः । महाभयं देहप्रमातृता । तदुक्तं क्षेमेन्द्रेण गीतानिष्यन्दे—

तावद् व्याघ्रभयं नृपानलभयं वेतालकृत्याभयं
शून्यारण्यभयं महाशनिभयं दुःस्वप्नशङ्काभयम् ।
वातोत्पातभयं ग्रहज्वरभयं क्षुब्धाब्धिवेलाभयं
वैराग्येण न यावदेव गलितः कायाभिमानभ्रमः ॥ इति ।

परचक्रस्तम्भकरमिति । परेषां स्वविपरीतानां विषयान्तरादागतानां राज्ञां चक्रं स्तम्भयतीदं चक्रमित्यर्थः । शस्त्रस्तम्भकरमिति । परैः शत्रुभिः प्रयुक्तानि शस्त्राणि स्तम्भयति, यथा साधकस्य बाधकानि न भवन्ति तथा करोतीदं चक्रमित्यर्थः । महाचमत्कारकरमिति । महाचमत्कारा उड्डीनादयो झटिति लोकानां बहुमानहेतवः प्रयोगविशेषाः, तेषां सम्पादनकरं चक्रमित्यर्थः । अथवा महत्या परायास्त्रिपुरायाश्चमत्कारोऽनुभवः, शक्तितत्त्वपरिज्ञानमिति यावत् । महाभुक्तिप्रवर्तकमिति । हाटकेश्वरादिभुवनेष्वधिकारितया स्थितिर्महाभुक्तिस्तत्सम्पादकमित्यर्थः ॥ ५४ ॥

१ एषा पङ्क्तिः गे. वाग श्व. विहायान्यत्र न दृश्यते । २. सौख्यप्र—वाग. से. । ३. तथा—वाग. से. गघ. । ४ अप—गघ । ५. विनाशनम्—वाग, ख., निवारणम्—वाग. से. । 'रौद्राभिचार' इत्यादि 'स्तम्भकर परम्' इत्यन्तं श्लोकद्वयमत्र वर्तते—गघ. । ६. सम्प्रवर्तकम्—ख. । ७. 'देह' नास्ति—क. ख. । ८. एतदुक्तं—क. । ९. घना—ख. ग. । १०. 'इत्यर्थः' नास्ति—क. ग. । ११. ग्यस्त्राणि—क. ग. छ. । १२. बन्धकानि—छ., साधकानि भवन्ति—घ. । १३. लौकिकानां—क. ग. ङ. ज. । १४. करमिदं—घ. । १५. भक्ति—क. ग. छ. । १६. समस्तगुन्दरादि—घ. ।

महावश्यकरं देवि महावेधकरं परम्[२] ।
महापुरक्षोभकरं महासु[१]खशुभप्रदम् ॥ ५६ ॥
महालक्ष्मीमयं देवि महामाङ्गल्यदायकम् ।

---

महावश्यकरं रा[३]जोर्वश्यादीनामपि । महावेधकरं पर्वतगजादीनामपि । महापुर-क्षोभकरं साधकेन्द्रे प्रविष्टे द्वारवतीन्द्रप्रस्थमथुरादिषु कृष्णाभिगमने यथा, यथा वा देवदारुवनादिषु परमेश्वरप्रवेशे । महासुखशुभप्रदम् । महासुखं महाशुभमिति । महासुखम् अकृत्रिमाहंपरामर्शः । महाशुभं विश्वदेहिविलयः । महालक्ष्मीमयम् । शिवशक्तिसामरस्यरूपं महाविकासमयमित्यर्थः । महा-

---

महावश्यकरं देवीति । [१०]समस्तलोकवशङ्करमित्यर्थः । महासौभाग्यदायकमिति । समस्तसुन्दरीवल्लभसम्पादकमित्यर्थः । महाज्वरहरं देवीति । महतां चातुर्थिकादीनां ज्वराणां नाशकरमिति यावत् । महाविषहरं परमिति । महतामत्युग्राणाम[११]पि विषाणा-मपहारकमिति यावत् । महामृत्युप्रशमनमिति । केनचिद्दोषेणाकालसम्भवानामपि मृत्यूनां नाशकरमित्यर्थः । [१२]अथवा कालमृत्यूनां नाशकरं भवति । महाभयविनाशकमिति । राजचौरादिनिमित्तानामपि [१३]भयानां ना[१४]शकरमित्यर्थः ।

[१५]महापुरक्षोभकरमिति । महतामिन्द्रचन्द्रा[१६]दिपुराणामपि क्षोभकरम्, किमुताल्प-वि[१७]भवानां [१८]भूवलयसंस्थितानामिति या[१९]वत् । महासुखशुभप्रदमिति । समस्तक[२०]रणोल्लास-

---

१. एषा पङ्क्तिः से. सध. क. विहायान्यत्र न दृश्यते । २. पुनः—सध. । ३. मुक्तिप्रवर्तनम्—सक., शुभसुख—सख. । ४. करं—सख. । ५. मङ्गल्य—शाक. ख. ग., मङ्गल—अ. सख. । ६. राजवश्या—क. । ७. सायरे—ग. । ८. 'महासुखं महाशुभमिति' नास्ति—ख. । ९. 'महाशुभं…परामर्शः' नास्ति—ख. ग. । १०. समस्तवश्यकर—क. ग. घ. । ११. 'अपि विषाणां' नास्ति—क. ग. छ. । १२. 'अथवा कालमृत्यूनां नाशकरं भवति' नास्ति—ख. ङ. । १३. 'भयानां' नास्ति—क. ख. ग. छ. । १४. नाशकम्—क. ख. ग. छ. । १५. इतः पूर्वम्—'पौष्टिकादिविशेषफलदम् । मोहमनेन दर्शयतीति भावः । सर्वर्तुकैः सर्वफलैः सर्वपुष्पैरपि प्रिये । विहाय मारणोक्तानि फलपुष्पाणि सुव्रते ॥ यो जुहोति स वै सर्व-सम्पदामालयो भवेत् ।' अधिकः पाठः—क. छ. । १६. 'आदि' नास्ति—क. ग. घ. छ. । १७. विभाध्या—ख. ङ. । १८. भूलोकस्थ—क. ग. छ. । १९. 'यावत्' नास्ति—क. ग. छ. । २०. करणो—क. ग. घ. छ. ।

महाप्रभावसंयुक्तं महापातकनाशनम् ॥ ५७ ॥
एवमेतस्य चक्रस्य प्रभावो वर्णितुं मया ।
न शक्यते महादेवि कल्पकोटिशतैरपि ॥ ५८ ॥

---

माङ्गल्यदायकम् । महामाङ्गल्यं द्वैतग्राममधिकारः । महाप्रभावं सदाशिवादिकं यद्बलम् । महापातकं शिवात्मभेदपरामर्शः । तदुक्तं भट्टगङ्गाधरेण—

आत्मेशजगतां भेदं यो नरः कुरुते मतिः ।
स महापातकी सत्यं पातकस्य महत्त्वतः ॥ इति ।

किं बहुना, चक्रराजवर्णनं कर्तुमशक्यमित्याह—एवमेतस्येति । अर्थवादाशङ्का न कार्या । तदुक्तं श्रीत्रिंशिकाशासने—

---

संकोचवशाद् मूलादिब्रह्मरन्ध्रान्तरालकुहरस्फुरितमहायोगपीठपीठिकासु समुल्लसिताकारपरापरलिङ्गमहाह्रदनिमग्नमनोमहावारणानां महायोगिनां यदनुभवसुखं तदेव शुभं प्रकाशयति । तत्सुखं ददातीति यावत् । उक्तं च श्रीमतशास्त्रे —

[1]यत्र यत्र मनस्तुष्टिस्तत्र तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥

अथवा शुभं शोभनं तत्संपादकमित्यर्थः । महालक्ष्मीमयं देवीति । महालक्ष्मी राज्यादिलाभस्तं ददातीत्यर्थः । महामङ्गलदायकमिति । महाभ्युदयपरम्पराप्रदायकमिति यावत् । महाप्रभावसंयुक्तमिति । महासामर्थ्यं ददातीत्यर्थः । महापातकनाशनमिति । प्राकृतानां ये ये पातका न ते कुलमार्गवर्तिनां महापातकाः, किन्तु [2]धीरहत्यादयोऽन्ये महापातकाः पञ्च । तेषामपि नाशकरमिदं चक्रमित्यर्थः ॥ ५५-५७ ॥

१. वर्णितो—ज. । २. उक्तं—क. । ३. भेदे—क. ख । ४. ते मतिम्—ग. ख. । ५. वक्तुं—ग. । ६. 'अर्थवादा ··· नार्हति ॥ इति' नास्ति—क. ख. । ७. विलोलकमल—ख. ङ. ज. । ८. 'स्फुरित' नास्ति—क. ख. ग. छ. । ९. 'पीठ' नास्ति—क. ग. छ. । १०. पिङ्गल—ख. ङ. ज. । ११. 'महा' नास्ति—ख. ङ. ज. । १२. प्रकाश्यते—ग. प्रकाशयतीति—ज. । १३. 'तत्सुखं ··· शोभनं' नास्ति—ख. ङ. ज. । १४. पारम्पर्यदा—ग. । १५. संबन्धिनां—क. ग. छ. । १६. महान्तः—घ. ज. । १७. नाशकमित्यर्थः—ग. ग. घ. छ. ।

1. एष श्लोकः स्वल्पेन पाठभेदेन सह विज्ञानभैरवे ( श्लो. ७४ ) उपलभ्यते ।
2. धीरहत्यादय इति । "धीरहत्या वृथापानं धीरपत्नीनिषेवणम् । धीरद्रव्यापहरणं तत्संयोगश्च

नार्थवादादिशङ्का च वाक्ये माहेश्वरे भवेत् ।
अबुद्धिपूर्वं हि तथा संस्थिते सततं भवेत् ॥
अनवच्छिन्नविज्ञानवैश्वरूप्यसुनिर्भरः ।
शास्त्रात्मना स्थितो देवो मिथ्यात्वं क्वापि नार्हति ॥ इति ॥ ४५-५८ ॥

---

एवमेतस्येत्यारभ्य कल्पकोटिशतैरपीत्यन्तस्यायमर्थः—एवंप्रभावस्यास्य महाचक्रस्य प्रभावो वर्णयितुं मया न शक्यते । [1]बहुकालं वर्णयता मयापीति यावत् ॥ ५८ ॥

अन्यच्च (च)क्रस्तुत्यां (महा? मोह)नादिपदेन मूलस्वामिन्या नवचक्रनामसंकेतः कृत इति । तदुक्तं वामकेश्वरतन्त्रे—

त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं देवि सर्वसौभाग्यदायकम् ॥
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।
सर्वरोगहर चक्रं सर्वसिद्धिप्रदायकम् ॥
सर्वानन्दमयं चापि नवमं सुरसुन्दरि । इति ।

[1]एतद्बाह्यगतमिति । एतस्य चतुर्दशारचक्रस्य बहिरष्टदलं पद्मं समालिखेत् । [2]तद्बाह्यतस्तस्याष्टारपद्मस्य बाह्यतोऽपि षोडशारं पद्मं रचयेत् । परिवेषो वृत्तत्रयम् । चतुरिति चतुरश्रम् । [3]चतुर्द्वारोपशोभितमित्यर्थः ॥ ४०-४१ ॥

अस्ति चात्र प्रमेयान्तरविषयो ह्येष चक्रसंबन्धः । तदुक्तं श्रीमन्त्रराजे—[4]

अष्टापदे चाष्टशूले गदा चाष्टसु सर्वदा । [5]अष्टाष्टकपदव्या(पि? पी) [6]स गुरुर्भैरवागमे ।
वृत्तद्वये [7]चतुर्द्वारे चतुरश्रत्रये [8]प्रिये । गणेशादिपदव्या(पि? पी) स गुरुर्भैरवागमे ॥
षोडशाधारचक्रस्थः षोडशस्वर[9]वाचकः । षोडशान्तकला[10]धारो स गुरुर्भैरवागमे ॥

---

१. 'बहुकालं वर्णयता मयापि' नास्ति—क. ग. छ. । २. 'तद्बाह्यत ''मित्यर्थः' इत्यस्य स्थाने 'तद्बाह्ये षोडशदलं पद्मं परिवेषरूपेण वृत्तत्रयं द्वारोपशोभितं चतुर्द्वारोपशोभित- मित्यर्थः.' इति पाठः—ख. ङ. ज. । ३. द्वारोपशोभितमिति यावत्—क. ग. छ. । ४. श्रीतन्त्रराजोये—ज. । ५. अष्टाष्टकेसरैर्वापि—ङ. । ६. त्रये—ज. । ७. लये—ङ. । ८. स्यापि—ङ. । ९. वाचन.—ङ. । १०. धारे—ङ. ।

पञ्चमः ॥ महापातकमित्युक्तं कौलिकाना कुलान्वये ।" (कुलार्णवे, ११।७०) । मनुस्मृतौ तु—
"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥"
(११।५५) इति पञ्च महापातकानि परिगणितानि ।

1. 'एतद्बाह्यगतम्' इत्यादि 'शोभितम्' इत्यन्तं पङ्क्तित्रयं से. च. ४०-४१ श्लोकत्वेन स्थापितं पूर्वमेव व्याख्यातम् । अर्थरत्नावल्यां तदत्र व्याख्यायते ।

---

अष्टानामष्टधारूपः पदव्यक्तिक्रमेण यः । इति मध्याष्टकं वेत्ति स गुरुर्भैरवागमे ॥
चतुर्दशपदान्तस्थश्चतुर्दशविराजितः । (नश्च? न च)तुर्दशभिन्यूनः स गुरुर्भैरवागमे ॥
दशधा दशगर्भान्तर्विचित्ररचनोज्ज्वलः । दशभूमिपदान्तस्थः स गुरुर्भैरवागमे ॥
दशकोलेश्वरो धीमान् दशदिग् दशभैरवः । दशाश्वमेधमध्यस्थः स गुरुर्भैरवागमे ॥
अष्टधा स्फुरते साधुर्वशिन्यादिभिरष्टधा । वेत्ति तां यन्त्रचक्रस्थां स गुरुर्भैरवागमे ॥
चतुर्धा कर्मविज्ञाने चतुर्धा सन्ततो यथा । यः समाकोशेचण्डेशः स गुरुर्भैरवागमे ॥ इति ।

इदमेव चक्रमान्तरीकृत्य सूत्रपातदशायां श्रीवामकेश्वरतन्त्रे प्रतिपादितम् । तत्प्रकारं यथा तथा वक्ष्ये—

अथातः संप्रवक्ष्यामि चक्रसंकेतनिर्णयम् । तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥
अस्य मध्ये तृतीयेन कर्णिका चैकलाञ्छिता । पद्मद्वयं चतुर्द्वारं चतुरं चैकभागकम् ॥
ब्रह्मस्थानं ततः कृत्वा कर्णिकाभूमिमध्यमे । चतुर्विंशत्यङ्गुलेन ब्रह्मस्थानं महेश्वरि ॥
भ्रामयेद् वृत्तरूपेण मण्डलं सम्यगालिखेत् । तस्मिन् वृत्ते महादेवि ब्रह्मसूत्रं निपातयेत् ॥
प्राक्प्रत्यगायतं देवि सम्यक् प्राचीविधानतः । तस्मिन् सूत्रे महादेवि नवधा लाञ्छनं चरेत् ॥
षट् षट् पञ्च त्र्यस्त्रीणि चतुश्च त्रयमेव च । षट् षट् षडङ्गुलेनैव दशभागानलाञ्छितान् ॥
याम्यसौम्यायतं दद्यात् सूत्राणां नव लाञ्छने । नवधा पातिते सूत्रे पार्श्वयोरुभयोरपि ॥
अङ्गुलानि क्रमेणैव मार्जयेत् परमेश्वरि । प्रथमं सप्तमं चैव तृतीयं चैव वन्दितम् ॥
प्रथमे नवमे चैव पार्श्वयोरुभयोरपि । त्रीणि त्रीण्यङ्गुलान्यत्र मार्जयेदुभयोरपि ॥
पञ्च पञ्चाङ्गुलं मार्ज्यं षष्ठे चैव चतुर्थयोः । उभयोः पार्श्वयोर्मार्ज्यं षोडशांषोडशाङ्गुलम् ॥
पञ्चमस्योभये पार्श्वे मार्जयेत् षोडशाङ्गुलम् । एवं संमार्जयेद् देवि समक्षेत्रं च कर्णिका(म्) ॥
सर्वसूत्राणि पार्श्वौ द्वौ ब्रह्मसूत्रेण संगतम् । योजयेत् क्रमशस्तस्मिन् सप्तमं च तृतीययोः ॥
योजयेदुभयोः पार्श्वौ सृष्टिनिष्ठं महेश्वरि । पञ्चशक्तिचतुर्वह्नितद्विकारसमन्वितम् ॥
द्वितीयस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् । नैवमं योजयेद् देवि नवमं प्रथमे युतम् ॥
नवमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् । द्वितीयस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥
योजयेदष्टमे देवि अष्टमं च द्वितीयके । अष्टमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥
चतुर्थस्य द्वयोः षष्ठे ब्रह्मसूत्रेण संगतम् । पञ्चमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥
षष्ठस्यैव द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् । पञ्चशक्तिश्चतुर्वह्निरेवमेव तु योजयेत् ॥
इति संसिद्ध्यते चक्रं कर्णिकान्तर्गतं समम् । पूर्वभागे पञ्चशक्तिः पश्चाद्वह्निश्चतुः प्रिये ॥

---

अथातः [१]संप्रवक्ष्यामि त्रिपुरा[२]चक्रमन्यथा ।
तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥ ५९ ॥

अथात इत्यादिसूत्रसप्तदशकेन पुनरपि प्रकारान्तरेण चक्रराजविन्यासमाह । अन्यथा "शक्त्या शक्तिम्" (१।२९) इत्युपक्रमात् । तदर्थं चक्रराजविन्यासार्थम् । त्रिहस्तं मण्डलोत्तममिति चक्रराजविन्यासाय स्वीकृतं क्षेत्रमुच्यते । तत् त्रिहस्तं कुर्यात् । त्रिहस्तशब्देन समानं त्र्यवयव-

विपरीतं तु वक्ष्यामि पश्चिमं पञ्चशक्तिकम् । चतुर्वह्निः पुरस्तात् तद्विशेषं शृणु प्रिये ॥
सप्तमं प्रथमे योगं ब्रह्मसूत्रेण संगतम् । अष्टमं च द्वितीयेन ब्रह्मसूत्रेण संगतम् ॥
प्रथमं नवमं योगं नवमे प्रथमे युतम् । द्वितीयं चाष्टमे योगं ब्रह्मसूत्रेण संगतम् ॥
अष्टमं च द्वितीयेन ब्रह्मसूत्रेण संगतम् । षष्ठं चैव चतुर्थेन ब्रह्मसूत्रेण संगतम् ॥
चतुर्थं सप्तमे योगं ब्रह्मसूत्रेण संगतम् । विपरीतमेवमेवं तु यथोक्तं परमेश्वरि ॥
पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः । तत्रैकमष्टकं मध्ये द्विदशारं चतुर्दश ॥
चतुर्दश ईशद्वन्द्वमष्टावेकं महेश्वरि । सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात् ॥
स्थितानि त्रिपुराचक्रे यद्योगाद् भैरवो भवेत् । बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम् ॥
गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः । चतुरस्रं ततः कुर्यात् कुर्याद् द्वारचतुष्टयम् ॥
चतुष्कोणसमायुक्तमेवं स्याच्चक्रमुत्तमम् । रक्तेन रजसापूर्य चक्रं शुक्लोच्चरेखिकम् ॥ इति ।

अन्यच्चाभियुक्तगातम्यं चक्रम्—

[१]चक्रं बैन्दवमम्बिकामयमियं वामा त्रयो ये भ्रमा
ज्येष्ठेयं यदिदं पुरन्दरपुरे रेखाचतुष्कं बहिः ।
योऽयं शक्त्यनलत्रिकोणनिवहो रौद्रीयमित्यामृतान्
योऽर्चाधारमकृत्रिमं कलयते मातः स ते पूजकः ॥

सृष्ट्यादिप्रविभागेन धामत्रयात्मप्रमेयमपि निरूपितं द्रष्टव्यम् ।

१. 'अथातः' इत्यादि 'चक्रमुत्तमम्' इत्यन्ताः सप्तदश श्लोका ऋ. से. विहाय कुत्रापि न दृश्यन्ते । २. चक्रमद्भुतनिर्णयम्—वाक. ख. । ३. इत्यादिसूत्रसप्तकेन—क., इत्येकादशेन—ख. । ४. इत्युपक्रमात्—क., इत्युक्तत्वात्—ख. । ५. मानं—क., सामान्य—ख. । ६. भ्रमणं—ट. । ७. एवं—ट. ञ. । ८. द्वन्द्वमष्टावेवमेव—ख. ट., युताष्टावेकं—ज. । ९. पद—ट. ।

१. एष श्लोको वामकेश्वरीमतविवरणेऽपि (पृ० २९) दृश्यते ।

अस्य[1] कार्या तृतीयेन कर्णिका चक्रलाञ्छिता ।
पद्मद्वयं द्वितीयेन चतुरस्रं च[2] शेषतः ॥ ६० ॥
ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाभूमिमध्यतः ।
याम्यसौम्यायतं दद्यात्तत्रस्थं सूत्रसप्तकम् ॥ ६१ ॥
तुर्य[3]सूत्रं ततो लुम्पाद् मध्यांशः स्याद् द्वि[4]भागशः ।
तृतीयपञ्चमौ नागभूपांशौ[5] द्व्यंशावर्जितौ ॥ ६२ ॥

---

कतामात्र[6]मुच्यते । अमुमेवार्थं स्फुटीकरोति—अस्येत्यादिना । अयमर्थः—स्वीकृतस्य क्षेत्रस्य भागेनैकेन कर्णिकां भागेन पद्मद्वयं भागेन चतुरश्रं च कुर्यादिति । ब्रह्मसूत्रं प्राक्प्रत्यगायत मध्यतो निहितं सूत्रम् । पुरा प्रथमम् । कर्णिकाभूमिमध्यतः तच्चक्रराजविन्यासाय स्वीकृतस्य त्र्यवयवस्य क्षेत्र[7]स्य मध्यतः कर्णिका[8]लाभाय विरचितस्य वृत्तस्य मध्ये । याम्यसौम्यायतं दक्षिणोत्तरायतम् । तत्रस्थं वृत्तस्थम् । सूत्रसप्तकं सूत्राणां सप्तकम् । अथमत्र प्रकारः—प्रथमं प्राक्प्रत्यगायतब्रह्मसूत्रा[9]वलम्बनेन

> प्राक् सूत्रं प्रथमं निधाय विद[10]धीतार्धेन तस्याङ्कितं
> मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
> ताभ्यां सूत्रमभिप्रसार्य चतुरः कोणांस्ततो लाञ्छयेत्
> क्षेत्रं[11] स्याच्चतुरस्रमत्र जनयेदन्यानि कुण्डान्यपि ॥
> ( त्रि. सा. ९।५ )

इत्यभियुक्तोक्तस्थित्या समचतुरश्रोत्पादनानन्तरं त्रिभागीकृते क्षेत्रे मध्यतः कर्णिका[12]वृत्तं[13] विरच्य तत्र दक्षिणोत्तरायतं समकोष्ठं सूत्रसप्तकं पूर्वादिक्[14]क्रमेण दद्यादिति[15] । तुर्य[16]सूत्रं प्रसृतेषु सप्तसु सूत्रेषु [17]मध्ये पूर्वतश्चतुर्थं सूत्रं

---

१. तस्य कुर्यात् त्रिभागेन कर्णिकां चक्रलाञ्छिताम् । पद्मद्वयं तदर्धेन हारक्षेत्रं च तरसमम् ॥—चाक. ख. । २. अथ—चाक. ख. से., क्रम—चाग. । ३. लुप्त्वा—चाक. ख., लुम्पेत्—चाग. से. । ४. द्विभागिकः—चाक. ख., द्विभागतः—चाग. से. । ५. भागौ कृत्वा त्र्यंशा—चाक. ख. । ६. र्थं लक्ष्यते—क. । ७. 'क्षेत्रस्य' नास्ति—ख. । ८. भागाय—क. ग. । ९. सूत्रनिधाना—ग. । १०. दलितार्धेन—क. । ११. सूत्रं—ख. । १२. कर्णिका—ख. । १३. 'वृत्तं' नास्ति—ख. । १४. दिशः क—ख.ग. । १५. 'इति' नास्ति—क. । १६. आदितुर्य—क. । १७. 'मध्ये' नास्ति—क.ख. ।

तेन मानेन सप्तैव वीथ्यस्तन्त्रेषु मध्यमम् ।
तृतीयस्य द्वितीयस्य चान्यसूत्रस्य चान्तयोः ॥ ६३ ॥
प्रसारयेदधोधःस्थं ततः सूत्रद्वयंद्वयम् ।
भौमे सप्तमके सूत्रे ब्रह्मस्थाने च संगतम् ॥ ६४ ॥

---

लुप्यात् मार्जयेत् । मध्यांशः स्याद् द्विभागश इति । तुर्यसूत्रमार्जने कृते मध्यतः कोष्ठद्वयमेकभागो भवतीत्यर्थः । पुनरपि मध्यमभागस्य किञ्चिद्विकासमाह—तृतीयेति । तृतीयपञ्चमौ । भागाविति[7] पूर्वम् । नागभूपांशौ अष्टांशषोडशांशौ । द्व्यंशवर्जितौ [1]द्वयेनांशेन वर्जितौ । कुर्यादित्यध्याहार्यम् । अयमर्थः—अष्टधा षोडशधा च विभक्तौ तृतीयपञ्चमौ भागावेकेनांशेन[2] किञ्चिद्ह्रस्वीकुर्यादिति[3] । तेनेति । तेन मानेन परित्यक्तांशद्वयेन मध्यभागमावर्जिततुर्यसूत्रमेकीकृतं महामध्यकोष्ठं पुनश्च विवर्धयेत् पुनरपि विकसितं कुर्यात् । तृतीयपञ्चमौ भागौ किञ्चिद्विकसितौ कुर्यादित्यर्थादायातम् । तृतीयस्येत्यर्धपद्यं पूर्वतः पश्चिमाग्रं व्यंश्चत्रयमाह । तृतीयस्येत्यनेनान्वितोऽन्त्यशब्दः पर्यन्तवचनः[4] ।

१. भागेन च पुनर्मध्यभागं विवर्धयेत्—ख्याक. ख. । २. आदि—ख्याक. ख. ग., ख्याख्या—से. । ३. द्वयं—ख्याक. ख. ग. । ४. भ्रमे—ख्याक. ख. । ५. भवेदि—ख. । ६. द्विकासभाग—क., विभाग—ख. । ७. 'विति'''विशम्य्या' नास्ति—ग. । ८. कुर्यात्राय—क. । ९. येनांशेन—क. । १०. षोडशांशौ—ग. । ११. 'विभक्तौ'''भागा' नास्ति—ग. । १२. वेकांशेन वर्जितौ कुर्यादिति—क., द्व्यंशवर्जितौ द्वयेनांशेन वर्जितौ—ग. । १३. त्यक्तेनांशा—क. ग. । १४. पञ्चमभागमावर्जित-तुरीय—ग., 'मध्यभाग'''न्त्यशब्दः' इत्यस्य स्थाने 'मध्यश्चत्रयमाह—तृतीयस्येति । अनेनान्वितोऽन्त्यशब्दः' इति पाठः—ख. । १५. 'मध्य' नास्ति—ग. । १६. त्यर्धपदेन—क. । १७. अस्त्र—क. ।

1. "द्वाभ्यामंशाभ्याम्" (पृ. ४५) इति सेतुबन्धे ।
2. एकेनांशेनेति । अष्टस्वेकः षोडशसु चैक इति प्रत्येकमेकैकेन, संभूय द्वाभ्यामंशाभ्यां वर्जिताविमौ भागौ कुर्यादित्यभिप्रायः ।
3. "यत्तु तृतीयद्वयोर्योरष्टांशाष्टके पञ्चमवीथ्योस्तु षोडशांशके च द्वौ द्वावंशौ पार्श्वद्वयेन न्यूनौ कुर्यादिति व्याख्यानं तत्तन्त्रान्तरेण भूयो विसंवादापत्तेरुपेक्षितम्" ( से. पृ. ४६ ) ।
4. "अन्ये त्वन्तशब्दस्तृतीयस्येत्यनेनान्वयदशायां प्रान्तपरः । द्वितीयाद्याभ्यामन्वयदशायां समीपपर इत्याहुः" ( से. पृ. ४६ ) ।

आपञ्चमादधःस्थानां त्रयाणां चान्ततो नयेत् ।
भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके ॥ ६५ ॥
सूत्रद्वयं चान्य[तस्तु] त्र्यस्राण्येवं भवन्ति षट्[1] ।
चतुर्दशारं देवेशि दशारं चात्र सिद्ध्यति ॥ ६६ ॥

द्वितीयस्य चाद्यस्य चेत्येताभ्यामन्तशब्दः समीपवचनः। आस्फालनीयसूत्रैर्मर्मानुगुणस्थान इत्यर्थः। ब्रह्मस्थाने एकमात्रीकृतस्य महामध्यकोऽस्य पुनर्विकासरूपस्य प्रतिग्रीकृतस्य पश्चिमतः परित्यक्तग्रहात्र्यश्राद् वहिर्यवैकमात्रे। अयमर्थः—प्रसृतेषु सप्तसूत्रेषु मध्ये पूर्वतस्तृतीयद्वितीयाद्यसूत्राणां त्रयाणामन्तरेषु सूत्राण्यावध्य ब्रह्मसूत्रपश्चिमाग्रभ्रमरेखायां तदनन्तरस्थसप्तमसूत्रमध्यभागे महोपह्वरब्रह्मस्थाने च सूत्रद्वयाग्राणि यथा भवन्ति, तथा प्रसारयेदिति। आपञ्चमेत्यर्धपद्यं पश्चिमतः पूर्वाग्रं त्र्यस्रत्रयमाह। अयमर्थः—प्रसृतेषु सूत्रेषु मध्ये पूर्वतः पञ्चमसूत्रमारभ्य पश्चिमतोऽवस्थितानां त्रयाणां सूत्राणां पूर्वदलेषु सूत्राण्यावध्य ब्रह्मसूत्रप्रागग्रभ्रमरेखायां तदनन्तरस्थप्रथमसूत्रमध्यभागे तदनन्तरस्थतृतीयसूत्रमध्यभागे च सूत्राग्राणि यथा भवन्ति तथा प्रसारयेदिति। एवं कृते त्र्यस्रषट्कं संपद्यते। आद्या शक्तिरायं वह्निपुरं च कर्णिकाभ्रमसंश्लेषीति चक्रराजस्येयं महोपनिषत्। [2]शक्त्या-शक्ति-

१. एवा षड्त्रिकं दृश्यते—वाक. ख.। २. द्वयं चान्यत्—वाक. ख. ग.। ३. चतुर्दशारमित्येवं दशारं च प्रसिद्ध्यति—वाक. ख. ग.। ४. कर्मा—ख.। ५. व्छस्यापु—ख. ग.। ६. इतः परम्—'यवैकमात्रे' इत्यधिकः पाठः—क.। ७. 'सप्त' नास्ति—क. ग.। ८. मध्यात्—ख. नास्ति—क.। ९. मन्तेषु—क. ग.। १०. भ्रभ्रमशिलाया—क.। ११. महोपह्वल—क., महापघाद्—ख. महोपर—ग.। १२. यदा—ख.। १३. तदा—ख.। १४. पश्चिमतः पूर्वाग्रत्र्यस्रसूत्रद्वयमाह—क., ऊर्ध्व चतुस्सूत्रामयमाह—ख.। १५. 'अयमर्थः' नास्ति—ख.। १६. तोऽध:—क. ख.। १७. पश्चिमदलेषु—ख. पूर्वपदन्तेषु—ग.। १८. ब्रह्म—ख.। १९. 'तदन⋯भागे' नास्ति—ख.। २०. द्वर्प—क.। २१. 'शक्त्या⋯द्रष्टव्यम्' नास्ति—ख.।

1. "वस्तुतस्त्र्यस्राण्येवं भवन्ति षट् इत्यृजुविमर्शान्युक्त एव पाठः साधुः" (से. पृ. ४७)।
2. "शक्त्या शक्तिम्" (१।२९) इत्यादिना प्रतिपादिते प्रथमे चक्रनिर्माणविधावप्येवं द्रष्टव्यमिति यावत्।

सूत्राद् द्वितीयकात् षष्ठाद्ब्रह्मसूत्रस्य पार्श्वयोः ।
सूत्रद्वयद्वयं देयमधऊर्ध्वक्रमात्मकम् ॥ ६७ ॥
तत्कोटिसंगतं पश्चात् सूत्रयुग्मं प्रसारयेत् ।
दशारं देवि संसिद्धमेतच्चक्रं तृतीयकम् ॥ ६८ ॥
सूत्रात् पञ्चमकान्मध्यादन्यत् सूत्रद्वयं नयेत् ।
ऊर्ध्वाधोमुखमध्यस्थन्यस्तमर्मद्वयावधि ॥ ६९ ॥
दद्यात् तृतीयकं सूत्रं तयोरन्योन्यसंगतम् ।
एवं चतुर्थमष्टारं मध्ययोनिश्च पञ्चमी ॥ ७० ॥

क्रमेऽप्येव द्रष्टव्यम् । एतावति कृते चतुर्दशारनिष्पत्तिः सम्पन्नेत्याह—चतुर्दशारमिति । सूत्राद् द्वितीयकादिति द्वाभ्यां पुनर्दशारमाह । द्वितीयकात्[1] पूर्वतो द्वितीयकात् सूत्रात् । षष्ठात् पूर्वतः षष्ठात् सूत्रात् । ब्रह्मसूत्रस्य प्राक्प्रत्यङ्निहितस्य महासूत्रस्य । तत्कोटिसङ्गतम् अधऊर्ध्वक्रमात्मकं विन्यस्य सूत्रद्वयाग्रसङ्गतम् । अयमर्थः—पूर्वतो द्वितीयसूत्रमध्यभागमारभ्य ब्रह्मसूत्रस्य पक्षयोरनन्तरकोणक्लृप्तदशारकोणद्विरेखावधि पूर्वाग्रं सूत्रद्वयं प्रसार्य पुनस्तत्तत्सूत्राग्रावलम्बनेन दक्षिणोत्तरतः सूत्रद्वयं प्रसारयेदिति । एवं कृते पुनर्दशारं सम्पन्नमित्याह—दशारं देवीति । सूत्रात् पञ्चमकादित्यर्धपद्यमष्टारं मध्ययोनिं चोत्पादयति । पञ्चमकात् पूर्वतः प्रसृतपञ्चमसूत्रात् । मध्यात् मध्यमभागात् । अथ विन्यासक्रमः—पूर्वतः पञ्चमसूत्रमध्यभाग-

१. द्रष्ट–चाक. ख. ग. । २. प्रसारितम्–चाक. ख. । ३. एवमेव कथितं चक्रमेतत्–चाक. ख. । ४. सूत्राग्रात् पञ्चमादूर्ध्वम्–चाक. ख. । ५. एवमेकारं चाग पञ्चमम् । इति संसिद्ध्यते चक्र कर्णिकान्तर्गतं समम्–चाक. ख. । ६. मेणेद–क. । ७. एव–क. । ८. दशारवस्तु–क. ख. । ९. मित्याह–क. ख. । १०. सूत्रतो–क. । ११. पसू–क. ख. । १२. ताप–क. ख. । १३. पश्चिमाप–क. । १४. इत परम्–'पूर्वतः षष्ठसूत्रमारभ्य ब्रह्मसूत्रस्य पक्षयोरन्तरक्लृप्तदशारकोणद्विरेखावधि पूर्वाग्रं सूत्रद्वय' इत्यधिकः पाठः–क. । १५. विस्तार–क । १६. 'पूर्वतः' नास्ति–ख. ।

1 "अजवस्तु—द्वितीयसूत्रस्य षष्ठसूत्रस्य यो मध्यभागस्तस्य ब्रह्मसूत्रस्पृष्टत्वात्तत्पार्श्वयोरित्यनेन तन्त्रेण वह्निप्राक्कोणशक्तिप्रत्यक्कोणयोरेव स्थाननिर्देश इति व्याख्यातं" (से. पृ. ४७) ।

अरुणा तु तवर्गस्था[1] पवर्गे जयिनी स्थिता[2] ।
सर्वेश्वरी यवर्गे तु शवर्गे कौलिनी[3] तथा ॥ ७९ ॥
एता वर्गाष्टके सम्यगष्टावेव हि देवताः ।
अर्चिताः पुरुषस्याशु प्रकुर्वन्ति वशं जगत् ॥ ८० ॥
उद्धरेत् प्रथमं रेफं तदधः कुटिलान्तकम् ।
तदप्यवनिबीजस्थं षष्ठस्वरसमन्वितम् ॥ ८१ ॥
ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यं कारयेत् परमेश्वरि ।
एतत्तद्वशिनीबीजं योगिनीनां मुखे स्थितम् ॥ ८२ ॥

---

वर्णं च यथायोगं संश्लेषयति । सम्यग् अविपर्यस्तत्वेन ॥ ७७-८० ॥

उद्धरेदित्यादिपञ्चदशभिर्वशिन्यादिवाग्देवताष्टकस्य बीजाष्टकं क्रमेण कथयति । तदधः तस्याधस्तात् । कुटिलान्तकम् । कुटिल. फकारस्तस्यान्तकं बकारः, तद् बकारबीजम् । अवनिबीजं लकारः । षष्ठस्वर ऊकार. । ऊर्ध्वं शिरः । अर्धेन्दुः कला । बिन्दुरनुस्वार. ॥ ८१-८२ ॥

---

इष्टदेवता वशिन्यादयः साधकेनार्चितास्तस्य वशे जगत् कुर्वन्तीत्यर्थः ॥ ७७-८० ॥

उद्धरेत् प्रथममित्यादि शृणु विद्याङ्गरूपिणीमित्यन्तस्यायमर्थः—आदौ रेफं बहिः समुद्धृत्य तदधः कुटिलान्तगमिति । कुटिलः फकारः, तस्यान्तगं बकारमुद्धरेदित्यर्थः । तदप्यवनिबीजस्थमिति । तदुद्धृताक्षरद्वयं लकारस्थित कुर्यात्, यथा भवति तथोद्धरेदित्यर्थः । षष्ठस्वरसमन्वितमिति । ऊकारसमन्वितमिति यावत् । ऊर्ध्वमर्धेन्दु-

द्वितीयवर्गप्रथममिन्द्रारूढं महेश्वरि ।
अधस्तान्नाभसं बीजमाग्नेयस्थं समुद्धरेत् ॥ ८३ ॥
चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतम् ।
एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् ॥ ८४ ॥

---

द्वितीयवर्गप्रथमं ककारः । इन्द्रो लकारः । नाभसं बीजं हकारः । आग्नेयो रेफः । चतुर्थस्वर ईकारः ॥ ८३-८४ ॥

---

बिन्द्वर्धचमिति । उद्धृतवर्णचतुष्टयस्य शिरसि अर्धेन्दुं कृत्वा बिन्दुरनुस्वार एतद्द्वय-मुद्धरेदित्यर्थः । यथा ब्लूँ । एतद्वशिनीबीजं योगिनीनां मुखे स्थितमिति । [1]योगिनीभिः सदा जप्तमित्यर्थः ॥ ८१-८२ ॥

द्वितीयवर्गप्रथममिति । द्वितीयवर्गः [5]कवर्गस्तस्य [6]वर्गस्य प्रथमाक्षरः ककारः । ऐन्द्रारूढ-मिति लकारारूढमित्यर्थः । अधस्तान्नाभसं [2]बीजमिति । तदनन्तरं हकारमुद्धरेदित्यर्थः । आग्नेयस्थं समुद्धरेदिति । आग्नेयो रेफः । तत्स्थान्युद्धृतानि वर्णानि यथा भवन्ति तथा कुर्यादित्यर्थः । चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतमिति । चतुर्थस्वर ईकारः, बिन्दु-रनुस्वारः, खण्डेन्दुरर्धचन्द्रः । [7]एतत्त्रितयमुद्धृतबीजानामुपरि [8]कुर्यादिति यावत् । एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् । कामेश्वरीबीजमित्यर्थः । यथा क्ल्हीँ ॥८३-८४॥

---

१. वर्गात्—त्राक. ख. ग. । २. मैन्द्रा—वाक. ख. ब. अ. । ३. नभाम्भर्व—सक. । ४. खण्डद्वय कृतम्—ब., नादविभूषितम्—सक. । ५. 'कवर्ग.' नास्ति—क. ग. घ. ङ. ज. । ६. 'वर्गस्य' नास्ति—क. ग. घ. ङ. । ७. एतत्त्रय—ख. । ८. कुर्यादित्यर्थः—क. ग. छ. ।

1. "तदिदं योगिनीना तद्वाचकवशिनीपदस्य मुखे स्थितमारम्भे प्रयोज्यम् । इदमुपलक्षणं कामेश्वर्यादिबीजानामपि तत्तद्वाचकपदारम्भे प्रयोक्तव्यतायाः ।"'योगिनीनां वशिन्यादिबीजाष्टकस्य मुखे स्थितं तेषु प्रथममित्यर्थं इति केचित् । योगिनीभिर्जप्तमित्यर्थं इत्यन्ये" (से. पृ. ५२)
2. "नाभसबीजाग्नेयशब्दा व्यञ्जनमात्रपरा इत्यपि केचित्" (से. पृ. ५३) ।

अरुणापञ्चमस्याधो वारुणं विनियोजयेत् ।
तदधोऽपीन्द्रबीजं तु सर्वोर्ध्वमपरं प्रिये ॥ ८५ ॥
एतत्तन्मोदिनीबीजं सर्वसत्त्ववशङ्करम् ।
वायव्यमिन्द्रबीजस्थं षष्ठस्वरसमन्वितम् ॥ ८६ ॥
अर्धेन्दुमस्तकाक्रान्तं बिन्दुना परिभूषितम् ।
एतत्ते कथितं देवि विमलाबीजमुत्तमम् ॥ ८७ ॥
सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ।

अरुणापञ्चमो नकार । वारुणं वकार । इन्द्रबीजं लकार । इपरम् ईकार । कलाबिन्दू चात्राध्याहार्यौ ॥ ८५-८६ ॥

वायव्यं यकार । सर्वपापं देहादिसङ्कुचितकर्तृत्वम् । उपद्रवो विकल्पबुद्धि ॥ ८६-८८ ॥

अरुणापञ्चमस्याधो वारुणं विनियोजयेदिति । अरुणावर्गस्तवर्गस्तस्य पञ्चमो नकारस्तस्याधो वारुणं वकारं विनियोजयेदित्यर्थः । तदधोऽपीन्द्रबीजं त्विति । उद्धृतयकारस्याधोदेशे इन्द्रबीजं लकारं योजयेदित्यर्थः । सर्वोर्ध्वमपरं प्रिये इति । एवमुद्धृताक्षरत्रयस्योपरि ईकारमुद्धरेत् तथा बिन्दुकलान्वितं च कुर्यात् । एतन्मोदिनीबीजम् । यथा न्व्लीँ ॥ ८५-८६ ॥

वायव्यमिन्द्रबीजस्थमिति । वायव्यं यकार । इन्द्रबीजं लकारः । षष्ठस्वरसमन्वितम् ऊकारसमन्वितम् । अर्धेन्द्वित्यादि । अर्धेन्दु कला, बिन्दुरनुस्वारः, ताभ्यां विभूषितं कुर्यादित्यर्थः । एतत्ते कथितं देवि विमलाबीजविग्रहमिति । एवमुद्धृतं बीजं विमलारूपमित्यर्थः । यथा य्लूँ ॥ ८६-८८ ॥

१. तदधः शान्तिबीजं च सर्वान्तिमपरं प्रिये—सक । २. एतत्तु—सख. ग घ । ३. नरव—शाक ख ज. । ४. न तु—सक., न च—सख. । ५. नोपरि—षाग. ते. ञ. सव ग. घ, कलाबिन्दुविन्दु—ञ. । ६. शोभितम्—सक. । ७. एतत्तु—सख. । ८. विग्रहम्—ञ ते. सक घ. । ९. 'लकार । इपरम्' नास्ति—ग. घ । १०. चाध्या—ख । ११. तदव पञ्चमो—क ग. घ. छ. । १२. 'वारुणं' नास्ति—क. ग. घ [illegible] । १३ बीजस्या—ख ङ ज । १४. 'त्रय' नास्ति—क. ग. घ । १५ रं विनियोजयेत्—ख. ङ. ज. । १६. षष्ठस्वरसमन्वित स्वरस्याधोदेशे ऊकारो देय—क. घ., षष्ठस्वर ऊकारः, अकारस्य स्थाने ऊकारं दद्यात् तथा कुर्यादित्यर्थं—ख. ङ. ज. । १७ 'अर्धेन्दु' नास्ति—क. ग घ. छ. । १८. भूषितं क—ख. ङ ज. । १९. एवमुद्धृतं बीजं विमलाविग्रहमित्यर्थं—क. ग. घ. छ ।

जकारं[1] कालमारूढं तदधो ज्वलनाक्षरम् ॥ ८८ ॥
चतुर्थस्वरसंभिन्नं[2] बिन्दुनादसमन्वितम्[3] ।
एतत्त[4]दरुणाबीजमरुणं सर्वमोहनम् ॥ ८९ ॥
शिवबीजं तदादिस्थमधस्ता[5]दैन्द्रवारुणौ ।
वायव्यमुपरोद्भिन्नं[6] संयोज्य परमेश्वरि ॥ ९० ॥
जयिनीबीजमेवेदं नादबिन्दुविभूषितम् ।

---

कालो मकारः । ज्वलनो रेफः ॥ ८८-८९ ॥

शिवबीजं हकारः । तदादिस्तस्य हकारस्यादिः, सकार इत्यर्थः[8] । ऐन्द्रं[9] लकारः । व[ा]रुणो वकारः । उपर ऊकारः ॥ ९०-९१ ॥

---

जकारं कालमारूढमिति । का[10]लो मकारः, त[11]ं जकारस्याधः कुर्यादिति यावत् । तदधो ज्वलनाक्षरमिति । मकारस्याधोदेशे[12] रेफं संपादयेत् । चतुर्थस्वरसंयुक्तमिति । चतुर्थस्वर ईकारः, तेन[13] संयुक्तं यथा भवति शिरस्थानं तथा कर्तव्यमित्यर्थः । एत[14]च्चतुः-पिण्डात्मकमरुणाबीजम् । अरुणाबीजं समस्तं जगन्मोहयितुं समर्थम् । यथा ज्म्रीं ॥८८-८९॥

शिवबीजमित्यादि । शिवबीजं हकारस्तदादिस्थं सकारम् । हकारस्याधः सकारः कर्तव्य इत्यर्थः । ताद[15]शस्य सकारस्याधोदेशे इन्द्रवारुणौ इन्द्रो लकारः, वारुणं वकारः, तदुभयमुद्धरणीयम् । वायव्यं यकारः । उपरोद्भिन्नम् उ[16]कारात् परस्थित ऊकारस्तत्संबद्धं कुर्यात् । [17]उद्धृतषडक्षराणां संयोजनमेकीकरणं विधाय नादबिन्दुविभूषितं कुर्यात् । एतज्जयिनीबीजं षट्पिण्डा[18]त्मकं सर्वरोगभयापह[19] सर्वेषा[20]मारोग्याभयङ्करमित्यर्थः । यथा ह्स्ल्व्य्रूँ ॥ ९०-९१ ॥

---

१. भान्तं जकार—ब. । २. संयुक्तं—वाग. अ. से. ब. सक. ख. ग. घ. । ३. विभूषि—सख. ग. । ४. देवा—सग. । ५. घः सोमेन्द्रवारुणे—सक., धस्ताच्चे—से. सख. ग., धस्तादि—अ. सघ. । ६. मूष—ब., मूस्व—सक. । ७. सर्वरोगभयापहम्—अ., कला—वाग. से., बिन्दुनाद—ब. । ८. 'इत्यर्थः' नास्ति—क. । ९. 'ऐन्द्रं···वकारः' नास्ति—ख. ग. घ. । १०. 'जकाराक्षरं कालमारूढं' अधिकः पाठः—ख. ङ. ज. । ११. 'त' नास्ति—क. ग. घ. छ. । १२. 'देशे' नास्ति—क. ग. ङ. छ. । १३. तेन संयुक्तं कुर्यात् । बिन्दुनादसमन्वितं कुर्यात् । यथा ज्म्रीं—क. ग. छ. । १४. चतुर्वर्णा—ख. ङ. ज. । १५. दास—क. ग. घ. । १६. उकारात् परमूकारम् । उद्धृत—क. ग. छ. । १७. 'उद्धृत···कुर्यात्' नास्ति—ख. ङ. ज. । १८. खण्डा—ज. । १९. भयहरं—क. ग. छ. । २०. सर्वेषां प्रियकरमित्यर्थः—क. ग. घ. छ. ।

उद्धरेन्मोदिनीवर्गचतुर्थं परमेश्वरि ॥ ९१ ॥
अधः कालाग्निवायव्यान् क्रमेण विनियोजयेत् ।
दीर्घायुर्बीजसंयुक्तान् यथानुक्रमयोगतः ॥ ९२ ॥
उपरीश्वरबिन्द्वन्तानेकत्र सुरसुन्दरि ।
एतत्सर्वेश्वरीबीजं सर्वत्रैवापराजितम् ॥ ९३ ॥

---

मोदिनीवर्गचतुर्थो झकार । दीर्घायुर्बीजम् । अमरेश्वरीबीजत्वादायुर्बीजमुकार, दीर्घायुर्बीजमूकार । ईश्वर. कला ॥ ९१-९३ ॥

---

उद्धरेन्मोदिनीवर्गेत्यादि । मोदिनीवर्गश्चवर्गस्तस्य चतुर्थो झकारस्तं झकार प्रथममुद्धरेत । अध कालाग्निवायव्यान् क्रमेण विनियोजयेदिति । कालो मकार, अग्नी रेफ, वायव्यो यकारः । तेन क्रमेण झकारस्याधोदेशे योजयेदित्यर्थ । दीर्घायुर्बीजसंयुक्तानिति । दीर्घायुर्बीजमूकार दीर्घरूपम्, तदादाय पूर्वोक्तान् वर्णान् तेन संयुक्तान् यथानुक्रमयोगेन कुर्यादित्यर्थ । उपरीश्वरबिन्द्वन्तानिति । ईश्वरो नादः । बिन्दुरनुस्वार । समस्तानेतान् एकत्र संयोजयेत् । एकबीजतां नयेदित्यर्थः । एतत्सर्वेश्वरीबीजमिति । एतदुद्धृत सर्वेश्वरीबीजं पञ्चपिण्डात्मक सर्वाणि सत्त्वानि साधकस्य वशे करोतीत्यर्थ । यथा झ्म्र्य्रूँ ॥ ९१-९३ ॥

१. बीज–अ., वर्ग–मे. वर्गाच्च–ब. सख. ग । २. बीज–सख. । ३. दीर्घेन्दु–ब., दीर्घोकारसमा–सघ । ४. बिन्दुना–अ., बिन्द्वाढ्य–सग., बिन्द्वन्त–मख. । ५. मेकत्रापि तथैव च–ब. सघ., मेकत्रापि नियोजयेत्–सग., मेकत्र विनियोजयेत्–धाम. अ. से. सक. ख. । ६. सर्वमरवशाङ्कुरम्–अ । ७. दीर्घायुर्बीजममरेश्वरत्वादयो बीजमुकार–क., दीर्घायुर्बीजमूकार । ईश्वरः कला–ग. । ८. अथ–ख. घ. ड. ज. । ९. 'इति' नास्ति–क. ग. छ । १० तेन प्रकारेण क्रमेण पूर्वोक्तझकार–ख घ. ड ज । ११. दीर्घरूपमादाय पूर्वोक्तवर्णं तेन संयुक्त यथा–ख ड. ज । १२. उद्धृतमेतद्रूप–ख. ड ज, एतदुद्धृत बीजमिति । एतदुद्धृत बीज–घ. । १३. यथा–ज. ।

कौलिनीपञ्चमं देवि कालबीजोपरि स्थितम् ।
सर्वाधस्तादपि तथा वह्निबीजं नियोजयेत् ॥ ९४ ॥
चतुर्थस्वरसंयुक्तं बिन्दिन्दुसमलङ्कृतम् ।
एतद्बीजवरं भद्रे कौलिनीरूपमास्थितम् ॥ ९५ ॥

---

कौलिनीपञ्चमं क्षकारः । वह्निबीजं रेफः । बीजानि [1]सुभगोदये लिखितानि ॥ ९४-९५ ॥

---

कौलिनीपञ्चमं देवीति । [2]कौलिनीवर्गः शवर्गस्तस्य पञ्चमं क्षकारस्तमुद्धरेत् । कालबीजोपरि स्थितमिति[३] । कालबीजं मकारस्तदुपरि वन्हिरसि स्थितं यथा भवति तथा कुर्यादित्यर्थः[४] । सर्वाधस्तादपि तथेति । उद्धृताक्षरादधोदेशे वह्निबीजमिति रेफस्तं नियोजयेत् । [५]चतुर्थस्वरसंयुक्तं चतुर्थस्वर ईकारस्तेन संयुक्तं कुर्यादित्यर्थः । नादेन्दुसमलङ्कृतमिति । कलानादान्वितं कुर्यादित्यर्थः । एतदुद्धृतं बीज[११]वरं कौलिनीबीज[१२] चतुःपिण्डात्मकमित्यर्थः । यथा क्ष्म्रीं[१३] ॥ ९४-९५ ॥

---

१. तदा—सख. । २. बीजं वह्नेः—सग. । ३. नादे—खग. अ. से. सग. प., बिन्दुनादविभूषितम्—सर., बिन्दुनादेन्दुलङ्कृतम्—सल. । ४. वरे—खग. से., जं परं—सघ. । ५. बीज—ख. । ६. भाषितम्—ख, सस्थितम्—सप. । ७. 'इति' नास्ति—ख. ग. ड. । ८. 'तदुपरि-रसि' नास्ति—ख. ग. । ९. येदित्यर्थ.—ग. ड. ज. । १०. 'चतुर्थस्वरसंयुक्तं' नास्ति—ख. ग. छ. । ११. बीजं परं—ख. प. । १२. विषर्ग—ख. ग. छ. । १३. लण्डा—ज. ।

1. शिवानन्दविरचितः सुभगोदयोऽत्रैव परिशिष्टे प्रकाश्यते । तत्रैमानि बीजानि द्रष्टव्यानि । एवमेवान्येऽपि सुभगोदयनाम्ना निर्दिष्टा विषयास्तत्रैवान्वेषणीयाः । अर्थरत्नावल्यामपीमानि बीजान्युद्धृतान्यत्रैवावलोकनीयानि । वामकेश्वरीमतविवरणे सेतुबन्धे च तथैव ।
2. "यत्तु कौलिनीवर्गः [illegible] इति मूर्धन्यादिवर्णपरत्वेनार्थरत्नावलीकृता व्याख्यातं तत्कवर्गे कौलिनीति पूर्वपञ्चविरुद्धम्" (से. पृ. ५६) । अत्र [illegible] पाठो [illegible] सर्वासु मातृकासु । तेन "[illegible]" (से० पृ० ५१) [illegible] ।

एवमेतानि बीजानि क्रमादष्टौ महेश्वरि ।
कथितानि [२]मयेदानीं शृणु विद्याङ्गरूपिणीम्[३] ॥ ९६ ॥
[४]करशुद्धिकरीं विद्यां तथाङ्गन्यासस[५]संस्थिताम् ।
आत्मासन[६]गतां [७]चापि तथा [८]चक्रासनस्थिताम् ॥ ९७ ॥

---

एवमादि मयान्तेन वृत्तानुवादः क्रियते । इदानीं शृणु विद्याङ्गरूपिणी-मित्यनेन भागेन सह सूत्रद्वयेन वक्ष्यमाणविद्योद्देशः क्रियते । विद्याङ्गरूपिणीं [११]प्रधानविद्यायाः अङ्गरूपिणी विद्यां शृण्वित्यर्थः ॥ ९६ ॥

[१२]करशुद्धिकरीं स्पृष्टपदार्थविशुद्धयर्थमङ्गुलितलशोधिनी[१३] विद्यामित्यर्थः । अङ्गन्याससंस्थिताम् । अङ्गन्यासः षडङ्गविधिः । मूलविद्यां शृणु प्रिये ! इति ।

---

एवमेतानीत्यादि । एव[१४]मुक्तप्रकारेण । एतानि बीजान्युद्[१५]धृतानि क्रमात् । [१६]यथानुक्रमेण - अष्टौ [१७]अष्टसंख्याकानि । हे[१८] महेशानि ! प्रकाशितानीत्यर्थः ।

शृणु विद्याङ्गरूपिणीमित्यारभ्य एवमेतस्य चक्रस्य साधकोऽर्चां समारभेदित्यन्तस्य व्याख्या लिख्यते । हे[१९] देवि ! शृणु श्रोतुमर्हसि । विद्याङ्गरूपिणीमिति । मूलविद्याया अङ्गरूपिणीं[२०] विद्यां शृण्विति समुदायोक्तिः ॥ ९६ ॥

पुनर्विशेषतस्तासामङ्गविद्यानां नामानि निर्दिशति शिवः—करशुद्धि[२१]करीं विद्या-मिति । करस्थस्य पूजोपकरणद्रव्यस्य स्पर्शयोग्यतामापादयति या विद्या सा [२२]करशुद्धि-करी विद्येति । तथाङ्गन्यासरूपिणीमिति । अङ्गन्यासे विनियुक्ता या विद्या सा अङ्ग-

सर्वमन्त्रासनगतां साध्यसिद्धासनस्थिताम् ।
देव्यावाहनविद्यां च[2] मूलविद्यां[3] शृणु प्रिये ॥ ९८ ॥
वाग्भवं प्रथमं देवि कामराजं द्वितीयकम् ।

---

मूलविद्याम् अङ्गिविद्याम् । शृण्वित्यत्र[5] पुनराख्यातं श्रोतृजनप्रवृत्त्यर्थम् । प्रिये इत्यामन्त्रणं[6]योग्यता[7]प्रदर्शनम् । यच्छ्रुतिः—

[1]'ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः ।
विद्यया वा विद्या यः[8] प्राह तानि तीर्थानि षण्मम ॥ इति ॥९७-९८॥
(सं० ब्रा० ३)

वाग्भवमिति सार्धैकेन[9] सूत्रेण करशुद्धिकरी विद्यामाह । प्रथमम् अहंविमर्शप्रथमकलानुत्तराक्षरम् । वाग्भवमिति वाचा प्रसवस्थानम् । अनुत्तरा-

---

न्यासरूपिणी विद्या । आत्मासनगतां[10] चापीति । देवीरूपस्य साधकस्य आत्मासने [11]विनियुक्ता यो[12] विद्यते । तथा चक्रासनस्थितामिति । चक्रासने विनियुक्ता सा चक्रासनस्थितेत्यर्थः । [13]सर्वमन्त्रासनगतामिति । सर्वमन्त्राणामासने विनियुक्तामित्यर्थः । साध्यसिद्धासनस्थितामिति । तथा साध्यसिद्धासनस्थिता या विद्या । ताः सर्वाः शृण्वित्यर्थः । देव्यावाहनविद्या चेति । देव्याः श्रीमहात्रिपुरसुन्दर्या आवाहनविद्यां शृण्वित्यर्थः । मूलविद्यां शृणु प्रिये । इति । हे[14] प्रिये ! समस्तजगदुत्पत्तिस्थितिलयहेतु[15]परमशिवात्मशक्तेः[16] परमानन्दभावात्मिकायाः[17] श्रीमहात्रिपुरसुन्दर्या वाचिका विद्या[18] समस्तविद्यादिभूता या मूलविद्या तां शृण्वित्यर्थः ॥ ९७–९८ ॥

---

१. चापि–सै. । २. तु–सग. । ३. चामपि–चाक. ख. । ४. बीजं–सग. ।
५. शृण्विति–क. । ६. त्वणं–ख. घ. । ७. 'प्र' नास्ति–क. ख. । ८. यो ह्याह–क. ।
९. सार्धेन सूत्रेण–क., सार्धैकेन–ख. । १०. गता–ख. ग. ङ. ज. । ११. 'वि' नास्ति–क. ग. ।
१२. सा तथेति–ख. ङ. ज. । १३. 'सर्व… स्थितामिति' नास्ति–ख. ङ. ज. । १४. 'हे प्रिये' नास्ति–ख. घ. ङ. ज. । १५. हेतु–ख. ङ. ज. । १६. शिवात्मशक्तिः–ज., शिवात्मिकाया.–क. ग. छ. । १७. 'परमानन्दभावात्मिकाया.' नास्ति–क. ग. छ. । १८. 'विद्या समस्त' नास्ति–क. ग. घ. छ. ।

1. तुलनीयम्—"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नास्ति साधनम् ॥" इत्यनेनाभाणकेन ।

शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥ ९९ ॥
एषा विद्या महेशानि करशुद्धिकरी स्मृता ।

देव सर्ववर्णोत्पत्तिरित्युपह्वरम् । अत्राभियुक्तोक्तिः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥
अनयोः सामरस्यं यत् परस्मिन् महसि स्फुटम् ।
अवर्णः सर्ववर्णानां व्यापकस्त्रिविधः स्मृतः ॥ इति ।

श्रीसिद्धामतेऽपि—

[1]सात्र कुण्डलिनी बीजं जीवभूता चिदात्मिका ।
तज्जं भवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥ इत्यादि ।

रहस्यमपि—"अकारो वै सर्वा वाक्" ( ऐ० आ० २।३।६ ) इति, "अ इति ब्रह्म तत्रागतमहम्" ( ऐ० आ० २।३।८ ) इति, "छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसः" ( ऐ० आ०

करशुद्धिविद्येत्यादि मूलविद्यान्तं यथाक्रमेण निर्दिष्टानां विद्यानां क्रमेणोद्धारं दर्शयत्युत्तरैः श्लोकैः । तत्र प्रथमं करशुद्धिविद्योद्ध्रियते—वाग्भवं प्रथम देवीत्यादिना । वर्णक्रमस्य प्रथममक्षरं सबिन्दुकमबिन्दुकं वा करशुद्धिविद्याया आद्यं बीजम् । तदेव वाग्भवमित्युच्यते । तथा वर्णक्रमस्य द्वितीयमक्षरमाकारं करशुद्धिविद्याया द्वितीयं बीजम् । तदेव कामराजसंज्ञकम् । शान्तान्त शकारस्यान्तं षकारस्तस्यान्तं सकारस्तं विसर्गसंयुक्तं कुर्यात् । ऐकारान्तान्तयोजितम् । ऐकारस्यान्तमोकारस्तस्यान्त-

१. सपुनम्—ख. ग. । २. महाविद्या—ख., महादेवि—ख. ग. । ३. परा—ख ।
४. त्रिपुरा—क. । ५. कः स त्रिधा—क. । ६. श्रीसिद्धान्तमते—क., श्रीमदोड्डामरेऽपि—ख., श्रीसिद्धामृते—वि, सिद्धयोगीश्वरीमते—ख. । ७. मात्रा—क. ख. ग. घ. । ८. बीज—वि. ।
९. तज्जीव इच्छोन्मेषाख्यस्त्रिधा—क. ख. ग. घ. । १०. तत्रागमनमहमिति छन्द—ग. घ ।
११. यमवाचामा—ग. घ. । १२. मूलविद्यानां—ख. । १३. त्तरश्लोकैः—क. ग. छ. । १४. सबिन्दुक वा पर—ङ. ज. । १५. 'बीजम्' नास्ति—क. ग. घ. छ. । १६. विसर्गयु—ग. घ. ।

1 तन्त्रालोके (३।२२०–२२१) सिद्धयोगीश्वरीमतशास्त्रानुसारपुनेन पठितोऽयं श्लोकः ।

ऐ-ओमध्यगतं बीजं वाग्विधानाय केवलम् ॥ १०० ॥
रुद्रयामलतन्त्रे[2] तु निर्दिष्टं परमाक्षरम् ।

३।२।३ ) इति च । एवमनुत्तरप्रसरत्वं[3] विश्वस्य विश्व[4]त्र प्रकाशितम्[5] । इत्यनुत्तरस्य वाग्भवत्वमभिधायानन्दस्य[6] कामराजसंज्ञत्वमाह—कामराजं द्वितीयकमिति । द्वितीयकम् आनन्दः शिवस्तद्बीजं कामराजसंज्ञम्[7] । "प्रसरन्ती आनन्दरूपा सती" (शि० वि० पृ० ६०) इत्यत्र महासमृद्धिरूपानन्दात्मना[8] व्याख्यातत्वात् । अनुत्तरानन्दौ सबिन्दुकाविति सम्प्रदायः । शान्तान्तमिति । शान्तः पकारः, तस्यान्तः सकारः । कादिसंयुक्तम् । कादिः विसर्गः । ऐकारान्तान्तयोजितम् औकारयोजितम् । एषेति । अस्यार्थः—एवंप्रकारा वाग्भवकामराजशक्त्यात्मिका विद्या करशुद्धिकरीति ॥ ९९-१०० ॥

एओमध्यगतमिति चतुर्भि[9]र्महारहस्यभूतषडङ्गन्यासविनियुक्तसमस्तनिकाभेदकन्दरूपमूल[10]बाला[11]विद्योद्धारः क्रियते । वा[12]ग्विधानाय वाक्प्रसरणाय (वाग्)व्यक्त्यर्थम्, (निर्दिष्टं) स्वाध्यासेन सोऽहमित्यभिसन्धानेन[13] वा । केवलं[14] ध्यानयोगाद्यनपेक्षमित्यर्थः । तुर्विशेषे । [1]अर्धेन्दुबिन्द्वङ्कितमित्यर्थः[15] ।

मौकारः सविसर्गसकारौकारान्वितं कुर्यात् । यथा श्रं आं सौः । एषेत्यादि । एषा उद्धृता श्रीमहात्रिपुरसुन्दर्या अङ्गविद्यानामष्टविधानां प्रथमा । अस्यास्तु करशुद्धिकर्मणि विनियोग इत्यर्थः ॥ ९९-१०० ॥

एओमध्यगतमित्यादि । एओमध्यगतमैकारं यद्बीजं तदिहाङ्गन्यासविद्याया आद्यं बीजम् । तदपि वाग्मयं वाग्विधानाय केवलं रुद्रयामलतन्त्रेषु निर्दिष्टं परमाक्षरमिति

१. एतन्–सार.। २. तन्त्रेषु–अ. सक. ख. ग. घ.। ३. रपतत्वम्–क. ख.। ४. विश्व–ग.। ५. शितः–क. ख. ग.। ६. नन्तरस्य–क.। ७. द्वितीयः कामानन्दः–ख. ग.। ८. संज्ञा–क.। ९. मदन–ख., महारूपा–ग. घ.। १०. अधि–घ.। ११. रान्तरसामृतं–ख. महाक्षरमृत–ग. घ.। १२. 'बाला' नास्ति–ख.। १३. 'वाग्वि···सन्धानेन वा' नास्ति–ख.। १४. सम्बन्धेन–ग. घ.। १५. केवल–ख.। १६. मिति–ग. घ.। १७. अष्टविधानामङ्गाना–क. ख. ग.।

1. एओमध्यगतम् ऐकाराक्षरम्, तत् अर्धेन्दुबिन्द्वङ्कितम् ऐं बीजं भवतीति यावत् ।

मादनं शक्रसंयुक्तं चतुर्थस्वरसंयुतम् ॥ १०१ ॥
ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यमाद्यन्तेऽतः परं पुनः ।
शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥ १०२ ॥
एषा विद्या महाविद्या योगिनीनां महोदया ।

---

परमाक्षरम् । विश्वाभेदमयत्वात् पारम्यम् । अक्षर [1]प्राग्वत् । यच्छ्रुतिः—"वागक्षरं प्रथमजा ऋतस्य" ( तै० ब्रा० २।८।८।५ ) इति । मादनमिति । मदन. कामस्तद्बीज मादनम् । इह तदेकदेशभूत ककारमात्र गृह्यते मादनमिति । शक्रसंयुक्तम् । शक्रो लकार. । चतुर्थस्वर ईकार. । ऊर्ध्वं शिर. । आद्यन्ते आद्यस्य वाग्भवस्यान्ते । योजितमिति शेष । अतः पर पुनरिति ।

---

यायत् । मादन शक्रसंयुक्तमिति । मादन ककार. । शक्रसंयुक्तं लकारसंयुक्तम् । चतुर्थस्वर ईकारः । ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यमिति अर्धचन्द्रबिन्दुयुक्तम् । इत्युद्धृतबीजमिदमङ्गन्यासविद्याया द्वितीय बीजम् । एतदपि कामबीजं प्रसिद्धम् । आद्यन्तेऽत पर पुनरिति । आदेर्वाग्भवबीजस्यान्तेऽनन्तरमुद्धृतकामराजबीजं योज्यम् । अत इत्यस्यायमर्थ —अस्मात् कामराजादनन्तरं पुन परं योज्यम् । परमिति सविसर्गसौकारम् । करशुद्धिविद्यायास्तार्तीय बीजमङ्गन्यासविद्याया अपि तार्तीयत्वेन योज्य नान्यदिति सूचयितु पुनः शान्तान्तमित्यादि पठति । कोऽर्थः ? करशुद्ध्यङ्गन्यासविद्ययोस्तार्तीयं बीजमेकमेवेति[10] । एषा विद्येत्यादि । एषा विद्या अङ्गन्यासविद्या महाविद्या महती चेयं विद्या चेति महाविद्या । महती महत्त्वसंपादिनी । विद्या ज्ञानप्रदा । केषाम् ?

१. अर्धेन्दुयुक्त—मक । २. ह्य कामराज समुद्धृतम्—वाग. मे., कामराज भवेत् प्रिये—सम. । ३. तत्पर पुन —शाक. स., स्वपर पुन—ज. । ४. संयुतम्—सम. । ५. योज्य—ग. घ । ६. इत्युक्तेन्दुमहद्दर्नामिति—घ. । ७ बिन्दुकलायुक्तमिति—ख ग. घ. ङ. । ८. 'इत्युद्धृत पर पुन' इत्यस्य स्थाने 'एतदङ्गविद्यान्यद्वितीय कामराजम् । आद्यन्तेऽत पर पुन' इति पाठ—ख. ङ. ज. । ९. 'बीज 'तार्तीय' नास्ति—ख. ङ. । १०. मेवेत्यभिप्राय —घ., मेवेत्यर्थ —ख. ङ. ज. । ११. 'महाविद्या' नास्ति—ख. ग. ङ. । १२ 'विद्या' नास्ति—ख ग. ङ. ।

1. प्राग्वदिति : "अक्षरे न क्षरत्यक्नुते वेति निष्पन्न" (पृ. १४, प. १०) इत्येव व्याख्यानम् ।

कुलविद्या महेशानि सर्वकार्यार्थ[१]साधिका ॥ १०३ ॥
अनया विद्यया गौरि[२] रक्षामात्मनि कारयेत् ।
एतस्या एव विद्यायाः शिवमायाग्निविन्दु[४]मत् ॥ १०४ ॥
बीजमादिपदे युक्त्वा[५] कार्यात्मासनरूपिणी[६] ।

---

कामराजबीजोद्धारात् पश्चादित्यर्थः । शान्तान्तमिति । अस्य बीजस्य पुनरुद्धारो मूलविद्योद्धारे पूर्णोद्धारः कर्तव्य इति द्योतयितुं महा[७]विद्यादरविधानार्थं च[८] महाविद्या । पूर्णाहन्ताप्रदत्वाद् महत्त्वम्, स्वरूपप्रकाशहेतुत्वाद् विद्यात्वम् । योगिनीनां नित्यसमावेशयुक्तानाम् । महोदया, भोगमोक्षलक्ष्म्यात्मकतृप्तिप्रदत्वात् । कुलविद्या[९] कुलाङ्गनावदे[१०]तिकौतुकेन योग्येन[११] स्वीकर्तव्येत्यर्थः । हे[१२] गौरि ! प्रकाशात्म[१३]तया स्वच्छभावे ! रक्षामात्मनि कारयेदिति । अयमर्थः—अनया मूल[१४]विद्यया आत्मशब्दाभिधेये देहे रक्षार्थं षडङ्गमाचरेदिति ॥ १००-१०४ ॥

---

योगिनीनाम् । महोदयेति । उदयशब्देन सम्पत्करी । कुलविद्येति[१५] । योगिनीनामियं विद्या कुलधनमूलभाण्डारम् । कोऽर्थः ? सुगोप्येति यावत् । सर्वकार्यार्थसाधिकेति । कर्तव्यत्वेनाभिमतानां चतुर्णामपि पुरुषार्थानां साधिके[१६]यं विद्या स्वातन्त्र्येण । ऐं[१७] क्लीं सौः इति । इह[१८] स्वैङ्गन्यासकर्मणि विनियोगः[१९] । अनया विद्यया देवि[२०] रक्षामात्मनि कारयेदिति । अनयो[२१]द्धृतया विद्यया हे देवि[२२] ! आत्मरक्षां कारयेदित्यर्थः[२३] । आत्मनीत्यनेन[२४] तृतीयबीजे शिवान्वितार्थं सूचितम् ॥ १००—१०४ ॥

---

१. धिनी—वाम. से., धका—ब., धकी—राक. ख. । २. देवि—अ. । ३. मुक्—सक. । ४. बिन्दु—सघ. । ५. मुक्तम्—वाम. से. अ., युक्ता—ब. सघ. । ६. तदा—वाम. से. सख. ■, देव्या—सक. । ७. 'महा' नास्ति—क. ख. । ८. 'महाविद्या···प्रदत्वात्' नास्ति—क. ख. । ९. मूल—क. । १०. दिति—क. ख. । ११. योगेन—क., योऽन्येन—ग. घ. । १२. 'हे गौरि···भावे' नास्ति—ख. । १३. त्मत्वभावे—क. । १४. मूलकुलवि—ख. ग. घ. । १५. कुलविद्येयम् । महेशानीति । इयं विद्या कुलधन योगिना मूलभण्डारम्—ख. ङ. ज. । १६. साधकीयं—ख. ङ. ज. । १७. 'ऐं क्लीं सौः इति' नास्ति—क. ग. घ. छ. । १८. स्वस्याङ्ग—ख. घ. ङ । १९. योग इति भावः—क. ग. घ. छ. । २०. गौरि—घ. । २१. या युद्—क. ग. छ. । २२. गौरि—ख. घ. ङ. ज. । २३. येत् सम्प्रदायेनेत्यर्थः—ख. घ. ङ. ज. । २४. नेनैव—ख. घ. ङ. ज. ।

**पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितम् ॥ १०५ ॥**
**त्रैलोक्यमोहनेनोथं सा विद्या चक्रासनेस्थिता ।**

---

एतस्या एवेत्यादिपञ्चभिरासनचतुष्टयमाह । एतस्या मूलविद्याया । आदिपदे आदिस्थाने । शिवो हकार. । माया ईकार. । अग्नी रेफ । अयमर्थं —अस्या विद्याया वाग्भवस्थाने भुवनेश्वरीवीजं युक्त्वा [1]स्थिता यदा, तदेयमात्मासनरूपिणी विद्येति । आत्मन स्वस्य साधकस्य ॥१०४-१०५॥

[2]पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितमिति । विद्यादिमस्य मूलविद्याया आदिभूतस्य वाग्भवस्य । ऊर्ध्वम् उपरि । अन्तं सकार. । कथ

---

एतस्या एव विद्याया शिवमायाग्निबिन्दुमद बीजमादिपदे युक्तमिति । एतस्या आत्मरक्षाविद्याया । आदिपदे आदिस्थाने स्थितं वाग्भवमुद्वास्य बीजान्तर प्रक्षिपेत् । शिवो हकारः । माया ईकार । अग्नो रेफ । बिन्दुरनुस्वारः । एतेषा चतुर्णा समुदायरूपं बीजं यदा प्रक्षिप्त भवति तदा आत्मासनरूपिणी भवतीयं विद्येत्यर्थः ।[10] ह्रीं क्लीं सौ. इति ॥ १०४-१०५ ॥

पुनर्विद्यादिमित्यादि । [11]पुनरपि विद्याद्यम् आत्मरक्षाविद्याया आदिस्थाने स्थित वाग्भवमेव चतुष्कूलमुद्वास्य प्रक्षिपेदित्यर्थ. । अस्योर्ध्वेऽनन्तर तु शिवान्वितमिति । [12]अस्योर्ध्वं अस्य बीजत्रयस्योर्ध्वे । अनन्तरम् आदिमध्यान्तरम्[13] । प्रत्येकं बीजानामासन

— —

१. विमासार्य-ब., यम–अ. याक. स. ग. । २ र्ध्वेऽनन्तर सु–अ., मन्तर तु—वाग. से. मन्तरन्त–वाक. स., मन्तरन्त –सख. ग , मन्त्यमत्र–व मन्त्रमन्त –सघ । ३. हिनी मा–ब, हिनीय–सग. । ४. सने–ध. सन. । ५. युक्त–ग. । ६. 'आदि' नास्ति–क. । ७. अयुक्ता–ब. स. । ८. 'आत्मन कस्य' नास्ति–स. । ९. 'प्र' नास्ति–क ग. छ. । १०. 'ह्रीं क्लीं सौः इति' नास्ति–क. ग. घ. छ. । ११. 'पुनरपि विद्याद्यम्' नास्ति–क. ग. घ. छ. । १२. 'अस्योर्ध्वं' नास्ति–क. ग. छ. । १३. न्तम्–स. ड. ज. ।

1 स्थिता यदेति । यदा इय विद्या स्थितेत्यर्थं ।

2. "केचित्तु विद्याया बालाया आद्य बीजमस्योर्ध्वं द्वितीय बीजम् । अन्ये तु पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितमिति पठित्वा विद्यादिमस्य मूलविद्याया आदिभूतस्य वाग्भवस्योर्ध्वमन्तं सकार कुर्यात् । हंसमन्त्रे सकारस्यान्त्यत्वाभिप्रायेणेह तथा निर्देश । अन्तं तृतीय बीज तु शिवान्वित कुर्यादिति व्याचख्यु " (से पृ. ९०) ।

**पुनराद्यां महाविद्यां शिवचन्द्रसमन्वितान् ॥ १०६ ॥**
**कृत्वा कामप्रदा विद्या सर्वमन्त्रासनस्थिता ।**

सकारस्यान्तत्वमिति चेत् ? उच्यते—अत्र वक्तुः शिवशक्तिबीजे बुद्धिस्थे । इह सर्वत्र विद्यासु हंसात्मनोः शिवशक्तिबीजयोः सन्निहितत्वात्तयोरादिबीजं हकारः, अन्तबीजं सकारः । अत्रान्तबीजं सकारमादौ विनियुङ्क्ते, आदिबीजं हकारमन्ते विनियुङ्क्ते इति । आदिबीजस्योपरि अन्तं सकारं कुर्यादिति शेषः । अन्तं तृतीयबीजम् । शिवान्वितं हकारान्वितम् । चक्रासनस्थिता चक्रस्यासनतया स्थिता ॥ १०५-१०६ ॥

पुनराद्यामिति । [1]आद्यां कुलविद्याम् । महाविद्यां सर्वविद्याकन्दभूमिम् । शिवचन्द्रसमन्विताम् । शिवचन्द्रौ हकारसकारौ । सर्वमन्त्रासनस्थिता । सर्वेषां मन्त्राणामासनतया स्थिता । शिवचन्द्रसमन्वितामित्य-

---

स्थाने शिवान्वितं शिवो हकारस्तेनान्वितं संबद्धं कुर्यादित्यर्थः । [10]ह्रैं ह्क्लीं ह्सौः । त्रैलोक्यमोहनीयं सा विद्या चक्रासनस्थितेति । अस्या विद्याया नाम त्रैलोक्यमोहनीति न केवलं नामतः, अर्थतोऽपि त्रैलोक्यमोहनीति त्रैलोक्यं मोहयतीति, योगिन्याश्रितेत्यर्थः । अस्या विद्यायाश्चक्रासनेऽत्र विनियोगः ॥ १०५-१०६ ॥

पुनराद्यां महाविद्यां शिवचन्द्रसमन्वितां कृत्वेति । पुनरप्याद्यां विद्याम् । आत्मरक्षाविद्यामित्यर्थः । शिवो हकारः । चन्द्रः सकारः । प्रतिबीजमादिस्थाने तदुभया-

---

१. हां–सक. ग. घ. । २. नित्यां–सग., विद्यां–सच. ध. । ३. ताम्–सक.ग. घ. । ४. महाराद्यो–ग. घ. । ५. समिति । आदि–क. स. । ६. 'चक्रा···राद्यामिति' नास्ति–ख. । ७. 'महाविद्यां' नास्ति–क. घ. । ८. भूताम्–ख., भूमिमिति–ग. । ९. 'अन्वितं' नास्ति–क. ग. छ. । १०. 'ह्रैं ह्क्लीं ह्सौः' नास्ति–क. ग. घ. छ. । ११. ह्रि–ख. घ. ट. । १२. यं मोहयनीति त्रैलोक्यमोहनं–ख. ट. ञ. । १३. 'अस्या विद्यायाः' नास्ति–ख. ट. ञ. । १४. अत्र विनियोगोऽपि चक्रासने–क. ग. घ. छ. । १५. मिनि–ख. ट. ञ. ।

1. "सकारहकारयोस्त्वादिपदेन वाच्यैव वर्ण परामृश्यत इति चिन्त्यम्" (से. पृ. ६१) ।

**देव्यात्मासनविद्यायाः पूर्वोक्ताया यथाक्रमम् ॥ १०७ ॥**
**अन्तदेशे तोयबिन्दुशक्रशक्तीरनुक्रमात् ।**
**संयोज्य परमेशानि साकमर्धेन्दुना ततः ॥ १०८ ॥**
**केवलाक्षरभेदेन साध्यसिद्धासनस्थिता ।**

---

विशेषोक्तेऽपि तृतीयबीजस्य पूर्वमेव तत्सम्बन्धस्य विद्यमानत्वात् शिवचन्द्रसमन्वितत्वं पूर्वबीजयोरेवेति तात्पर्यम् ॥ १०६-१०७ ॥

देव्यात्मासनेति । देव्यात्मासनविद्याया देवीरूपतामापन्नस्य साधककस्यासनतया स्थितायाः । अन्तदेशे तृतीयबीजस्य स्थाने । तोयबिन्दुशक्रशक्तीरनुक्रमात् । तोयं वकारः । शक्रो लकारः । शक्तिरेकारः, योन्याकारत्वात् । केवलाक्षरभेदेन तृतीयस्थानप्राप्ताक्षरमात्रेण । साध्यसिद्धासनस्थिता

---

न्वितं कुर्यादितीयं[14] विद्या कामप्रदा भवति । न[15] केवलमैश्वर्यार्थे, अत्रास्या विद्यायाः सर्वमन्त्रासने[16] विनियोगः । [17]हसैं हसक्लीं हसौः इति ॥ १०६–१०७ ॥

देव्यात्मासनविद्यायाः पूर्वोक्ताया यथाक्रममिति । पूर्वोक्ताया देव्या आत्मासनविद्याया बीजद्वयं यथाक्रमेण स्थितं भ[18]वतु । अन्तदेशे तार्तीयबीजस्थाने पूर्वस्थितबीजं विसृज्य बीजान्तरं प्रक्षेपणीयम् । तोयबिन्दुशक्रशक्तीरनुक्रमादिति । तोयो वकारः । बिन्दुरनुस्वारः । शक्रो लकारः । शक्तिरेकारः । एतान् यथा[19]क्रमं संयोज्य गुरूपदेशपूर्वकम् । साकमर्धेन्दुनादत इति । अर्धेन्दुना[20]दतः कलानादाभ्यामुपेतं कुर्यात् । केवलाक्षर-

---

१. अन्तर्देशे–सक. ख. । २. सार्धं–सक. ग. । ३. नादतः–अ. से. सक., संपुटम्–सख. । ४. योगेन–ग. । ५. विद्या साध्यासनस्थिता–खाक. ख., विद्या सिद्धा–अ. । ६. मेवं–ग. घ. । ७. स्थापि–क. ख. । ८. 'देव्यात्मा…स्थितायाः' नास्ति–ख. । ९. यमा–ग. ख. । १०. 'अन्तदेशे' नास्ति–क. ख. । ११. देशे–क. ख. ग. । १२. भेदेन–ख. । १३. 'साध्य…सिद्धा इति' नास्ति–अ. । १४. यमपि–घ. । १५. केवलमैश्वर्यप्रदा भवतीति सर्व–ग. ङ. ज., केवलमैश्वर्यार्थेऽस्या अपि विद्यायाः सर्व–घ. । १६. सनस्थाने–क. ग. घ. ङ. । १७. 'हसैं हसक्लीं हसौः इति' नास्ति–क. ग. घ. ङ. । १८. भवति–क. ख. ग. ङ., भवेत्–ज. । १९. क्रमेण–क. ग. ङ. । २०. नादकला–घ. ।

1. शक्तिश्चतुर्थस्वरः, तथा च ह्रीं क्लीं ब्लीं इत्युद्धारो वामकेश्वरीमतविवरणे ।

हंसबीजसमारूढामाद्यामग्न्यासनस्थिताम् ॥ १०९ ॥
सर्वार्थसाधिका विद्या देव्यावाहनकर्मणि ।

---

तत्तन्मन्त्रप्रतिपाद्यानां साध्यानां सिद्धानां च देवतानामासनतया स्थिता । देवतानां तु द्वयी स्थितिः—कर्मसिद्धा आजानसिद्धा इति ॥ १०७-१०९ ॥

देव्यावाहनविद्यामाह—हंसेति । आद्यां मूलविद्याम् । हंसबीजसमारूढाम् । [1]हंसशब्देनानच्कौ हकारसकारौ लक्ष्येते । अग्न्यासनस्थितां रेफासनस्थिताम्, कुर्यादिति शेषः । सर्वार्थसाधिका पुरुषार्थचतुष्टयकरी । इयं विद्या देवीसन्निधिकारीत्यभिप्रायः । एतद्विद्योद्धारेऽभियुक्तोक्तिः—

---

भेदेन विद्या सिद्धासनस्थितेति । केवलमन्त्यदेशस्थबीजव्यत्यासमात्रेण पूर्वोक्तात्मासनविद्यैव साध्यसिद्धासनस्थिता भवतीत्यर्थः । ह्रीं क्लीं ब्लें ॥ १०७-१०९ ॥

हंसबीजसमारूढामाद्यामग्न्यासनस्थितामिति । हंसबीजं हकारसकारौ । तदारूढामाद्यां विद्याम् आत्मरक्षाविद्याम् । अग्न्यासनस्थितां रेफसहितां कुर्यादिति यावत् । सर्वार्थसाधकी विद्या देव्यावाहनकर्मणीति । इयमुद्धृता विद्या धर्मार्थकाममोक्षाणां चतुष्टयानां साधकी पञ्चकूटात्मिका । अस्या विनियोगो देव्यावाहनकर्मणीत्यर्थः । ह्रैं ह्स्क्ल्रीं ह्स्रौः ॥ १०९-११० ॥

---

१. सौम-याक. ख. । २. रूढां मायामात्मा-ग., रूढां-सच. । ३. स्थिता-सख. ग. । ४. साधकी-याक. ख. अ., साधिकीं-ग. सच., साधिका-सख. । ५. विद्या-ग. सख. घ. । ६. 'साध्यानां' नास्ति-क. ख. । ७. 'तु' नास्ति-क. ख. । ८. पूजासन-च. ख. । ९. 'आद्यां मूलविद्यां' नास्ति-क. ख. । १०. साधनी-क. ख. । ११. 'एतद्विद्योद्धारे' नास्ति-क. । १२. विन्यास-क. ख. ग. ङ. छ. ज. । १३. 'ह्रीं क्लीं ब्लें' नास्ति-ग. घ. छ. ज. । १४. बीजौ-क. ख. ग. छ. । १५. 'इयमुद्धृता…कर्मणीत्यर्थः' इत्यस्य स्थाने 'एषा धर्मादिसाधकी पञ्चकूटात्मिका विद्या । अत्रावाहनकर्मणि विनियोगः' इति पाठः-ख. ङ. ज. । १६. 'ह्रैं ह्स्क्ल्रीं ह्स्रौः' नास्ति-क. ग. घ. छ. ज. ।

1. "प्राञ्चस्तु—हंसमन्त्रघटकं व्यञ्जनद्वयमित्येव हंसपदार्थः । तेन हकारसकारौ द्वावपि निरूप्य इत्याहुः । ये तु हंसेति स्वरूपमेव न बीजनामेति व्याचक्षते…। अतएवास्तु ईदृशं कर्म पूर्वानुपूर्वं मन्त्रमानात्मकं सम्प्रदायमेव शरणीकुर्वन्ति" (से. पृ. ६१) ।

एवमेता[1] महाविद्या देवि[2] सर्वार्थसिद्धिदा[3]: ॥ ११० ॥
महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये ।

[1]व्योमेन्दुवह्न्यधरबिन्दुभिरेकमन्यद्र[4]क्ताच्छकेन्द्रशिखिभि. सरमार्ध[5]चन्द्रैः ।
अन्यद् द्युशीतकरपावकमन्वमन्तै[6]र्बीजैरमीभिरुदिता त्रिपुरेति विद्या ॥ इति ।
( प्र० सा० ९ ।२ )

करशुद्ध्यं[7]द्याद्यावाहनान्ता उद्धृता[8] विद्या. स्तौति—एवमिति । ऋजु-विमर्शिन्यां विद्या न लिख्यन्ते, सुभगोदये[9] लिखितत्वात् । ऋजुविमर्शिन्यां तु ग्रन्थविवरणं क्रियते[10] । इदमप्युक्तमस्माभिः—

---

एवमेता महाविद्या देवि सर्वार्थसिद्धिदा इति । एवमुद्धृता विद्या[11]. करशुद्ध्या-द्यावाहनान्तेषु[12] कर्मसु विनियुक्ताः सर्वार्थसिद्धिदा सकलपुरुषार्थसाधिका[13] इत्यर्थः[14] । तत्र प्रथमोद्धृता करशुद्धिकरी विद्या प्राधान्येन विद्यैश्वर्यप्रदा । तते[15] उद्धृता अङ्गन्यासविद्या आत्मरक्षाकर्मणि विनियुक्ता द्वितीया[16] । तृतीयविद्या च साधयति[17] यत्किञ्चित्तल्लोके नास्ति, तथा देव्यात्मासनकर्मणि ( विनियुक्ता ) । चतुर्थी विद्या समस्तसम्पदमाकर्ष-यति, तथा चक्रासनकर्मणि विनियुक्ता । पञ्चमी विद्या[18] त्रैलोक्यं मोहयति,[19] तथा सर्वमन्त्रासनकर्मणि स्थिता । षष्ठी विद्या[20] प्राधान्येन समग्रैश्वर्यप्रदा, तथा साध्य-

---

१. मेषा–सग. । २. देव्या –सक. । ३. दा–सग. । ४. च्छाक्ताच्छिवेन्द्र–क. ख. । ५. मार्ध–वी. । ६. मन्त्यमन्त्ये–वी., मन्यमन्तै –क.ख. । ७. द्धेषावा–क. ख. । ८. 'उद्धृता ... शिन्यां तु' नास्ति–घ. । ९. दयोक्तत्वात–क. ख. । १०. 'क्रियते' नास्ति–क. ख. । ११. 'विद्या' नास्ति–ख. ङ. ज. । १२. नान्तकर्मणि–क. ग घ. छ. । १३. सिद्धिदा –ख. ङ. ज. । १४. 'इत्यर्थ' नास्ति–ख. ङ. ज. । १५. तदनन्तरोद्धृता विद्या–क. ग. घ छ. । १६. 'द्वितीया ... देव्यासनकर्मणि' नास्ति–क. ग. छ. । १७. 'विद्या' नास्ति–ख. ङ. ज. । १८. तीत्यर्थं –क. ग. घ. छ । १९. 'विद्या' नास्ति–ख. ङ. ज. । २०. न्येनैव–क. ग. छ. ।

1. व्योमेति । व्योम हकारः । इन्दु शुभ्र सकार । वह्नी रेफः । अधर ऐकारः । बिन्दुरनु-स्वार । एतै सम्पिण्डितैराद्यबीजम् । रक्त हकार । अच्छ सकारः । क इति स्वरूपम् । इन्द्रो लकार । शिखी रेफ । रमा ईकार. (?) (रमा ईकार—इति तु विवरण-दीपिका, पृ. ५७१) । अर्धचन्द्रो बिन्दु । एतै सम्पिण्डितैर्द्वितीयं बीजम् । द्युईकारः ।

**मादनं तदधः शक्तिस्तदधो बिन्दुमालिनी ॥ १११ ॥**

**ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ।**

---

पूर्वं विद्यां गुरोर्लब्ध्वा मूलमृजुविमर्शिनीम् ।
महासारं सुकृतिनः पश्यन्तु सुभगोदयम् ॥ इति ॥ ११० ॥

मादनमित्यादिसप्तकेन मूलविद्योद्धारः क्रियते । एतद्विषयेऽभियुक्त-वचनम्—

अनेककोटिभेदैस्तु[1] गदितं त्रैपुरं महः ।
तन्मध्ये[2] तु परा दीप्ता महात्रिपुरसुन्दरी ॥ इति,

---

सिद्धासनकर्मणि विनियुक्ता । सप्तमी[3] विद्या किं किं न साधयेत्, सर्वमपि साधये-दित्यर्थः, तथा देव्यावाहनकर्मणि स्थिता पञ्चकूटसं( ह्याष्टमी ? ह्या सप्तमी ) महाविद्या[4] सर्वार्थसाधकीत्यर्थः । एवं स्वातन्त्र्येण सर्वार्थसाधक्यो विद्या यस्या मूलविद्याया अङ्ग-भूतास्तस्याः सकलपुरुषार्थसाधनसामर्थ्यमस्तीति किमु वक्तव्यम् । तदुक्तं संकेतपद्धत्याम्—

आसामष्टविधानां तु विद्यानां पृथग् नामग्रहणं कृतम् । तथा—

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीमालिनी च सिद्धाम्बा त्वष्टमी त्रिपुराम्बिका ॥
त्रिपुरा प्रथमा नित्या द्वितीया त्रिपुरेश्वरी ।
सुन्दरीति तृतीया स्याच्चतुर्थी पुरवासिनी ॥
पञ्चमी त्रिपुराश्रीः स्यात् षष्ठी त्रिपुरमालिनी ।
सप्तमी त्रिपुरासिद्धा त्वष्टमी त्रिपुराम्बिका ॥ इति ॥ ११० ॥

---

१. त्वदन्तर्वि-अ. ब. सक. ख. ग. घ. । २. भोगि-घ. । ३. तत्र मध्ये-घ. वि. । ४. महा-ख. । ५. सप्तमस्थाने स्थिता-ख. घ. ङ. ज. । ६. 'महाविद्या' नास्ति-ख. । ७. सकलार्थप्रदान-ख. ङ. ज. । ८. 'विद्यानां तु' नास्ति-घ. । ९. 'कृतम् । तथा' इत्यस्य स्थाने 'यथा' इत्येव पाठः-ख. ङ. ज. । १०. सुन्दरी च-क. ग. छ. । ११. एषा पङ्क्तिर्नास्ति-ख. ङ. ज. ।

शीतकरः सकारः । पावको रेफः । मनुरौकारः । अमन्त इति अं अनुस्वारः । अन्तो विसर्गः । बिन्दुविसर्गयुक्तमित्यर्थः । (अमन्तो विसर्जनीयः—इति [illegible] विवरणदीपिका, पृ. ५७१) । एभिः सम्पिण्डितैस्तृतीयबीजम् । एभिस्त्रिभिर्बीजैः संयुक्ता त्रिपुरा नाम विद्या (प्र. सं. ५७-५८ पत्रयोः) ।

प्रोत्कीलनं विधायास्या देवदेवेन दर्शितम्[1]।
चतुर्विंशतिसाहस्रे[2] रससारकसञ्ज्ञ[3](क.१के) ॥ इति च[4]।

अत्र लोपामुद्राप्रस्थान[5]माश्रित्य निष्कीलविद्यानुसारेण सत्सम्प्रदायान्वयेन[6] व्याख्या लिख्यते। अस्याः सत्[7]सम्प्रदायान्वितत्वं नाम ओड्याण[8]कामरूपजालन्धरपूर्णगिरिपीठचतुष्टयाश्रय[9]श्रीमहात्रिपुरसुन्दरीकामेश्वरीवज्रेश्वरीभगमालिनीदेवीस्वरूपविमर्शकै[10]र्चर्यानाथोड्डीशनाथ[11]षष्ठीशनाथ[12]मित्रीशनाथलोपामुद्रागस्त्यकङ्काल[13]तापसधर्माचार्यमुक्तकेशी[14]श्रीमद्दीपकनाथदिव्यसिद्ध[15]क्रमान्वितत्वात्, दीपकाचार्यो[16]रसपुनसङ्केतपुञ्जप्रकाशकजिष्णुदेवप्रभृतिमहायोगिवर्यमानवौघपरिगृहीतत्वाच्च। इयं[17] मध्यमवीजप्रधाना विद्या, वीजत्रयेऽपि कामराजवीजसयोगात्। मादनं [1]मदयति हर्षयतीति मादन प्राण. शिवरूप । सति

---

अथेदानीं[18] मूलविद्यामुद्धर्तुमुपक्रमते—महात्रिपुरसुन्दर्या मूलविद्या शृणु प्रिये! इति। मादन तदध शक्तिस्तदन्त[19]र्बिन्दुमालिनीति। मादन क्रोधीश.। तस्याधोदेशे शक्तिर्झिण्टीश। तदधस्तस्याधोदेशे बिन्दुमालिनी त्रिमूर्तीश। ऐन्द्रमाकाशबीजस्थमिति। ऐन्द्र पिनाकीश'। आकाशबीजस्थमिति लकुलीश[20]। लकारं हकारोपरि स्थित यथा भवति तथा कुर्यादित्यर्थ.। अधस्ताज्ज्वलनाक्षरमिति। आकाशबीजस्याध.स्थाने

---

१. ता—ग. घ.। २. साहस्रे—क. ख. घ.। ३. मसारकसञ्जित—क., रसारकमसञ्जितम्—ख.। ४ 'च' नास्ति—क. ख.। ५ प्रसार—क.। ६. दायत्वेन येन—ग.। ७. 'सत्' नास्ति—क., सत्सम्प्रदायत्व कथमिति—ख., सासम्प्रदायत्व कथम्—ग. घ.। ८. उड्याण—क। ९. 'आश्रय' नास्ति—क., आश्रया—ख.। १०. र्शन—क.। ११. थोड्डुना—ग. घ.। १२. षष्ठना—ग. घ.। १३. कालतापस—क.। १४. शीश्वरश्रीदीपकला—क.। १५. सैद्ध-ग. घ.। १६. दीपकला—क.। १७ इय च—क.। १८. 'अथेदानीं वाग्भवसज्ञक भवतीति' इत्यस्य स्थाने 'मादन क्रोधीश, शक्ति मुण्डीश, बिन्दुमालिनी त्रिमूर्तीश, ऐन्द्रं पिनाकीश, आकाशबीजस्थमिति लकुलीश, अधस्ताज्ज्वलनाक्षरमिति भुजङ्गेश, मायाबीजे त्रिमूर्तीश, बिन्दुरनुस्वार, ईश्वरो नाद। एतद्वाग्भवसज्ञम्' इति पाठ—क. ख. ग.। १९ 'स्तदधो बिन्दु' इति तु टीकानुगुण पाठ। २०. लकुलीश' नास्ति—क. ग. घ.।

1 "ऋजुविमर्शिन्यामपि—(मा?म)दयति हर्षयतीति मादन प्राणो हकार। प्राणस्यैव वृत्त्य तरेऽपाने प्राणो वामोऽपानो भवन इति श्रुतेश्च। तस्य हकारस्याध शक्ति पूर्वोक्ताय बीज सकार। बिन्दुमालिनीनाम्नेन ककार एव गृह्यते सम्प्रदायादिति व्याख्यानम्" (सं. पृ. ९५)।

**मायाबिन्द्वीश्वरयुता[1] सर्वोपरि नियोजिता[2] ॥ ११२ ॥**
**अयं स वाग्भवो देवि वागीशत्वप्रवर्तकः ।**

---

हि[3] प्राणे हर्षे[4] सर्वे प्र[5]हृष्यन्ति नासति[6]। प्राणस्य[7] वृत्त्यन्तरात्मन्यपाने मदशब्दः श्रुतौ दृष्टः—"प्राणो वै गृत्सोऽपानो मदः" ( ऐ० आ० २।२।१ ) इति। तत्संबद्धं बीजं मादनम्। स च महाप्राणरूपो हकारः, शिवबीजमित्यर्थः। अथवा मा[8]द्यतीति शक्त्युपभोक्तुः शिवस्य मादनं[9] इति नाम[10]। ननु[11] शास्त्रेऽत्र[12] सर्वत्र मादनशब्दः ककारवाचकः, इह कथमन्यथेति। उच्यते। सत्यम्। किन्त्विहत्यो मादनशब्दो हकारमेव गृह्णाति। कथम्? विद्याया निष्कीलत्वात् सत्सम्प्रदायान्वितत्वादतिरहस्यत्वाच्च, आगमान्तरे तथा व्याख्यातत्वाच्च। सत्सम्प्रदायविहीना पुनरत्रापि[13] स्वोत्प्रेक्षया तथा मन्यन्त इत्यस्मदुक्तमेव समञ्जसम्। तदधः तस्य हकारस्याधः। शक्तिः अमृतबीजम्, सकार इत्यर्थः। मादनशक्तिशब्दाभ्यां[14] मोघात्राधाररूपं[15] शिवशक्त्यात्मकं हंसबीजमुद्धृतमिति यावत्। तदधः तस्य सकारस्याधःप्रदेशे। बिन्दुमालिनी तु[16]ण्डबीजम्, ककार इत्यर्थः। तदुक्तं रससारसंग्रहे[17]—

---

ज्वलनाक्षरं भुजङ्गीशः। माया[18] त्रिमूर्तीशः। बिन्दुरनुस्वारः। ईश्वर इति नादः। पूर्वोद्धृतबीजवरस्य शिरःस्थाने बिन्दुनादान्वितं यथा भवति तथा नियोजितं बीजं वाग्भवसंज्ञकं भवतीति। अयं स वाग्भवो देवि वागीशत्वप्रवर्तक इति। अयं[19] स वाग्भव इति प्रसिद्धो वागीशत्वं प्रवर्तयतीति[20] भावः ॥ १११-११२ ॥

---

१. युतं—वाम. से. सक. ग.। २. जितम्—वाम. अ. से. सक. ग., जयेत्—सख.। ३. 'हि' नास्ति—क. ख. घ.। ४. 'हर्षे' नास्ति—क. ख. घ.। ५. 'प्र' नास्ति—क. ख. घ.। ६. 'नासति' नास्ति—क. ग.। ७. प्राणवृ—क.। ८. वन्ति—क. ख.। ९. मायतीति—ग. घ.। १०. नामेति—क. ख. ग.। ११. 'ननु' नास्ति—क., 'ननु''समञ्जसम्' नास्ति—ख.। १२. 'अत्र सर्वत्र' नास्ति—क., 'सर्वत्र' नास्ति—ग.। १३. पुनरपि—क.। १४. रूपा—ख.। १५. ग्यामत्राधार—क. ग.। १६. मदन—क.। १७. मन्त्र—क.। १८. मायाबीजं—घ.। १९. 'अयं स वाग्भव इति प्रसिद्धो' नास्ति—ख. ङ. ज.। २०. यतीत्यर्थ—ख. घ. ङ. ज.।

विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः ।
कौलिवा[1] या रहस्यान्मादनेत्यादितैः[2] क्रमात् ॥
मादनः[3] प्राणरूपस्तु[4] विकासः शिव[5] उच्यते ।
सकारस्त्वपरो ज्ञेयः संकोचः शक्तिरूपवान्[6] ॥
संकोचः परमा शक्तिर्विकासः[7] परमः शिवः ।
संकोचश्च विकासश्च हंस[8] इत्यक्षरद्वयम् ॥
तयोराधाररूपेण[9] कर्तनं[10] विन्दुमालिनी ।
प्राणो विन्दुरिहि[11] प्रोक्तः साहचर्यादपानके ॥
अधो[12] धरेन्द्रमाकाशं[13] ज्वलनं च[14] तयोरधः ।
मायाविन्द्वूर्ध्वगो[15] चैव वाग्भवोऽसावकीलितः[16] ॥ इति ।

श्रीहंसपारमेश्वरेऽपि[17]—

मा शक्तिस्तु समाख्याता दनं स्वीकारकृच्छिवः[18] ।
स[19] वै मादन इत्युक्तो हकारः शिवसंज्ञकः ॥
तत्र[20] शक्त्यर्थयोर्यत्वे[21] सकारस्त्वं[22] विधीयते ।
शिवे[23] हकार इत्युक्तः सकारे[24] शक्तिरव्यया ॥
विन्दुमालिनिकार्णस्य पर्यायं परमेश्वरि[25] ।
शक्रव्योमानलार्णा[26] ये मायाविन्द्वीश्वरादयः ॥
यथा स्थितास्त्र[27] तत्तथ्या वाग्भवः स[28] निराविलः ।
द्वावन्यौ कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ[29] ॥ इति ।

---

१. कौलितानि–क., ललितायामहाविद्या–चि. । २. स्यादिभिः–क. । ३. मादनं–क. ख. । ४. यं तु–ख. ग. घ. । ५. परमः शिवः–क., जीव उच्यते–ख. ग. । ६. रूपत–चि. । ७. 'शक्तिर्वि' अत्रैव क्रमात्पुस्तकसमाप्तिः । ८. हंस–चि. । ९. रूपे तु–ख. । १०. कर्तव्यं–चि. । ११. रिति–ख. । १२. अधो–ख. । १३. शार–ख. । १४. तु–चि. । १५. ध्वंगा–चि. । १६. सावकीलकः–ग., साम कीलितः–चि. । १७. पर–चि., सारेऽपि–ग. । १८. रवः शिव–ख, रवः शिव–ग. घ. । १९. मवँ–ग., सैव–चि. । २०. तस्य–चि. । २१. योर्व्य–चि. । २२. रस्य–ग. घ., रः स–चि. । २३. शिवो–ख. ग. चि. टी. । २४. सकार:–चि. टी. । २५. श्वरे–ग. घ., श्वरम्–चि. । २६. र्णाश्च–चि. । २७. नि तत्तथ्यं–ख. ग. घ. । २८. स्थाप्ति–ख., यं सनिलानिलः–चि. । २९. निष्कलवरात्मको–चि. ।

**शिवबीजं त्रिधा युक्त्वा सृष्टिस्थितिलयक्रमैः ॥ ११३ ॥**
**द्वयमाद्येन रहितमाद्याधो मदनाक्षरम् ।**
**पुनः स्थितिशिवाधस्तादिन्द्रबीजं नियोजयेत् ॥ ११४ ॥**

---

अत्र त्रिपुरसुन्दरीकल्पलतायामभियुक्तोक्तिः—

प्राणो देवीसखाद्यो दशशतनयनः शम्भुरग्निस्त्रिमूर्तिः
शून्यश्चन्द्रार्धनादैः शिखिरुचिरुचिरो वाग्भवोऽसावकीलः ॥ इति ।

ऐन्द्रं लकारः । आकाशबीजं हकारः । ज्वलनाक्षरं रेफः । माया ईकारः । बिन्द्वीश्वरौ प्राग्वत्[1] । अयं स वाग्भव इति । एवमुद्धृतोऽयं वाग्भव इत्यर्थः ॥ १११-११३ ॥

कामराजबीजमाह—शिवबीजं त्रिधा युक्त्वेति । शिवबीजं हकारः । अयमर्थः—सृष्टिस्थितिसंहारक्रमबुद्ध्या हकारत्रयं योजयेदिति । द्वयमाद्येन रहितमिति । स्थितिसंहारात्मकहकारद्वयमाद्येन सकारेण रहितमित्यर्थः ।

---

शिवबीजं त्रिधा कृत्वा सृष्टिस्थितिलयक्रमैरिति । शिवबीजं शवर्गचतुर्थमक्षरम् । तत् सृष्टिस्थितिलयक्रमात् त्रिधा कुर्यादित्यर्थः । द्वयमाद्येन रहितमिति । स्थितिलयात्मकशिवाक्षरद्वयमाद्येन चैन्द्रबीजेन रहितं कुर्यादित्युक्तं भवति । द्वयमाद्येन रहितमित्युक्त्या सृष्टिशिवस्याधःस्थाने आद्योपेतं कुर्यादिति "अप्रतिषिद्धमनुमतम्" इति न्यायेनार्थात् संपद्यते । अन्यत्र, समानबलयोरुभयोः प्रकृतयोः सतोस्तयोर्मध्येऽन्यतरे निषिद्धेऽन्यतरस्यापरिहार्यत्वं संपद्यते । आद्याधो मदनाक्षरमिति । आद्यस्य चन्द्रबीजस्य अधःस्थाने द्वितीयवर्गाद्यमक्षरं प्रक्षिपेदित्यर्थः । पुनः स्थितिशिवाधस्तादिति । मदनाक्षर-

---

१. कृत्वा—धाग. अ. से. म. सक. ख. ग. घ., युङ्क्त्वा—धाक. ख. । २. क्रमात्—धाग. अ. से. सक. । ३. शङ्कुरोऽग्नि—ख. । ४. दश्रुति—ख. । ५. 'आकाशबीजं हकारः' नास्ति—ख. । ६. ज्वलनो—ख. । ७. इति—ख. । ८. 'क्रम' नास्ति—ख. । ९. रमत्र—ख. । १०. 'स्थिति' नास्ति—घ. । ११. त्मकं हरमिति द्वय—ख. । १२. क्रमैरिति—ख. ङ. अ. । १३. तं—ख. घ. ङ. ज. । १४. 'चन्द्रबीजेन' नास्ति—ख. घ. ङ. ज. । १५. कुर्यात् । आद्यं चन्द्रस्तेन रहितं कुर्या—ख. ङ. अ. । १६. 'अधः' नास्ति—क. ग. छ. ।

1. प्राग्वदिति । "बिन्दुरनुस्वारः" (पृ. ९०, प. १३), "ईश्वरः कला" (पृ. ९४, प. ७) इति ।

**तथा लयशिवाधोऽपि ज्वलनं च महेश्वरि ।**
**चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दलङ्कृतम् ॥ ११६ ॥**
**एवमेतन्महाबीजं कामराजं महोदयम् ।**

---

सामर्थ्यात् सृष्टिशिवाधःस्थाने सकारबीजमस्तीति प्राप्तम्, "अप्रतिषिद्धमनुमतम्" इति)न्यायेन । एवमादितो हंसबीजं सिद्धम् । आद्याधो मदनाक्षरमिति । आद्यस्य सकारस्याधःस्थाने ककारबीजं भवतीत्यर्थः । पुनः स्थितेति । अस्यार्थः—मध्यमशिवबीजस्य हकारस्याधःस्थाने, इन्द्रबीजं लकारम्, नियोजयेदिति । तथा लयेति । ज्वलनं रेफः । अयमभिप्रायः—संहारशिवरूपतृतीयहकारस्याधःस्थाने रेफं नियोजयेदिति । चतुर्थस्वरबिन्दुखण्डेन्दवः प्राग्वत्[1] । एवमेतदिति । एवमुद्धृतं कामराजबीजमित्यर्थः ॥ ११३–११६ ॥

---

स्याधःस्थाने स्थितो यः स्थितिशिवस्तस्याधस्तात् अधःस्थाने । इन्द्रबीजं नियोजयेत् । माधवीयोजं नियोजयेदित्यर्थः । तथा तेन प्रकारेण । पूतनाबीजस्याधःस्थाने स्थितो यो लयशिव, ज्वलनार्णं महेश्वरीति, तस्य लयशिवस्याधःस्थानेऽसृग्बीजं नियोजयेदित्यर्थः । चतुर्थस्वरसंयुक्तमिति । शान्त्यक्षरं नियोजयेदित्यर्थः । बिन्दुखण्डेन्दलङ्कृतमिति । एवमुद्धृतं बीजं बिन्दुनादकलान्वितं कुर्यादित्यर्थः । एवमेतन्महाबीजं कामराजं महोदयमिति । एवमुद्धृतं कामराजं न नामतः कामराजम्, अर्थतोऽपि महोदयं सकलपुरुषार्थसाधनमित्यर्थः ॥ ११३–११६ ॥

---

१. ज्वलनार्णं–याग. अ. से. सक. ख. ग. घ., ज्वलनं सु–ज. । २. न्दुसंयुतम्–सै. । ३. शिवस्थाने–ख. । ४. सकारं–ग. । ५. अत्राप्रति–ग. । ६. सस्ति–घ. । ७. हका–ख. । ८. ककारं–ग. । ९. स्थित्य–ग. घ. । १०. मध्यशि–ख. । ११. हपस्य–ख. । १२. शिवरूपस्या–ख. । १३. 'बीज' नास्ति–ख. । १४. य स्थितो–क. ग. छ. । १५. 'स्थिति' नास्ति–क. ग. घ. छ. । १६. 'अधस्तात्' नास्ति–ख. घ. ङ. ज. । १७. महेशानीति–ख. ङ. ज. । १८. 'बिन्दु' नास्ति–क. ग. छ. ।

1. प्राग्वदिति । "चतुर्थस्वर ईकारः" ( पृ. ९१, प. ६ ), "बिन्दुरनुस्वारः" ( पृ. ९०, प. ११ ), "अर्धेन्दुः कला" ( पृ. ९०, प. १२ ) इति ।

मायाबीजं महेशानि मादनं शक्रसंयुतम् ॥ ११६ ॥
चन्द्रबीजं केवलं तु विनियोज्य वरानने ।
त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण तु ॥ ११७ ॥
संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ।

शक्तिबीजमाह—मायेति । मायाबीजं भुवनेश्वरीबीजम् । हे महेशानि ! महेशानस्य महाभैरवस्य आत्मभूते । मादनशक्रौ [1]प्राग्वत् । चन्द्रबीजं सकारः । केवलमिति । शिवबीजसंयोगवर्जितमित्यर्थः । तुरवधारणे । संहारक्रमयोगेनेति । वाग्भवकामराजबीजवन्नानुलोमेन शक्तिबीजोद्धारः, किन्तु विलोमेनेत्यर्थः । इह विद्यायां त्रिष्वपि बीजेष्वन्तःस्थातृतीयमस्तीति,

मायाबीजं महेशानीति । मायाबीजं भुवनेश्वरीबीजम् । मादनं विसर्गान्तम् । [2]शक्रसंयुतम् । शक्रो मांसबीजम्, तत्समायुक्तं तदुपेतम् । कोऽर्थः ? भुवनेश्वरीबीजस्योर्ध्वे लकारं नियोजयेत् । लकारोपरि ककारं योजयेदित्यर्थः । चन्द्रबीजं केवलं त्विति । हकारवर्जितं केवलं चन्द्रबीजमेवादौ योजनीयं हे वरानने ! इत्यर्थः । त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण त्विति । कामराजबीजस्योद्धारावसरे यः क्रमोऽसौ सृष्टिक्रमस्तं सृष्टिक्रमं त्यक्त्वा तत्रैव शक्तिबीजोद्धारावसरे संहारक्रम इति मन्तव्यम् । न मन्त्रोच्चारक्रम उक्तः । उच्चारक्रमस्तु पूर्ववत् । सृष्टिक्रम एवेत्यर्थः । पूर्वोद्धृतकामराजबीजे आदिमध्यहकारद्वयलोपात्तदेव शक्तिबीजं भवतीत्यर्थः । इदमुद्धृतं तार्तीयं बीजं शक्तिसंज्ञं सकलसामर्थ्ययुक्तम् ।

१. स–सक. । २. बीजमे–वाक. ख. । ३. गुच्चार–वाक. ख. । ४. नेशीबी–ख. । ५. 'हे महेशानि···आत्मभूते' नास्ति–ख. । ६. 'बीज' नास्ति–ख. । ७. यात्रि–ग. घ. । ८. 'इति' नास्ति–ग. घ. । ९. 'मायाबीजम्' इत्यत आरभ्य ४ पटल २४ श्लोकस्य 'प्रथमबीजमम्' इति यावन्नास्ति–घ. । १०. भुवनेशी–ख. ङ. । ११. मादन–ख. । १२. बीजमिति–ख. ङ. ज. । १३. क्रमो–ख. ङ. ज. । १४. संहारक्रमेणबीजोद्धारक्रम–ख. ङ. ज. । १५. तूच्चार–ख. ङ. ज. । १६. शिवशक्ति–ख. ङ. ।

1. प्राग्वदिति । 'मदनः कामः···शक्रो लकारः' (पृ० १००, पं० ७-८) इति ।
2. "ये तु शक्रसंयुतमिति मायाबीजविशेषणत्वेन व्याचक्षते···" (सि. पृ. ६७) ।

सम्प्रदायस्य कश्मीरोद्भूतत्वात्, योगिनीप्रधानतया विद्यायाः प्राकृतभाषाविशेषत्वाच्च यथासम्प्रदायं तस्य व्यवहार इत्युपदेश.। इयं विद्या सुभगोदयेऽपि न लिखिता, अतिरहस्यत्वात् ॥ ११६-११८ ॥

---

अत्र लोपामुद्रामते वाग्भवोद्धारे स्वागम[1]सम्प्रदायविशेषोऽस्तीति[2]। तद्यथा—मादनमिति मोदयतीति[3] मादनमिति व्युत्पत्त्या शक्त्युपभोक्तुः शिवस्याभिधानम्[4]। तदय[5] शक्तिरिति मौन्तसस्याभिधानम्। तदन्तर्बिन्दुमालिनीति तुण्डस्याभिधानम्॥ ऐन्द्रमाकाशबीजस्यमित्यादि यथापूर्वं द्रष्टव्यम्। तदुक्तं हसपारमेश्वरे रससारसंग्रहे च—

विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः।
कीर्तिता[6] या रहस्यत्वान्मादनेत्यादिवः क्रमात्॥
मादनः[7] प्राणरूपस्तु विकासः शिव उच्यते।
सकारस्त्वपरो ज्ञेयः संकोच. शक्तिरूपवान्[8]॥
संकोचः परमा शक्तिर्विकासः परमः शिवः।
संकोचश्च विकासश्च हंस[9] इत्यक्षरद्वयम्[10]॥
तयोराधाररूपेण वर्तनं[11] बिन्दुमालिनी।
प्राणो बिन्दुरिति प्रोक्त साहचर्यादपानके॥
अधो[12] धरेन्द्रमाकाशं ज्वलनं च[13] तयोरधः।
मायाबिन्दूर्ध्वगी[14] चैव वाग्भवोऽसौ[15]प्रकीर्तित॥ इति।
मा शक्तिस्तु समाख्याता देवं स्वीकारकृन्दिह[16]।
सैं वै मादन इत्युक्तो हकारः[17] शिवसंज्ञकः[18]॥
तत्र शक्तिर्यथोर्थत्वे[19] सकारत्वं[20] विधीयते।
शिवे हकार इत्युक्त सकारे[21] शक्तिरव्ययः॥

१. मुखागम–ख., स्वनाम–ग., मुखादिम–ङ, मुखागमनं–ज.। २ 'इति' नास्ति–ख. ङ. ज। ३. 'मादयतीति मादनमिति' नास्ति–क. ग. छ। ४ यान मादनमिति–ख. ङ ज। ५. मादन–ख. ङ. ज। ६. ललिताया महादेव्या–चि। ७. मादनं प्राणरूपं तु–क. ख. ग. ङ. छ. ज.। ८. रस्यं पर–क. ग. छ.। ९. स्पत –चि.। १०. हस–ख. ङ. छ ज. चि.। ११. क्वर्ण–क. ग. छ, वर्तव्य–चि.। १२. अयो–ङ. ज. चि.। १३. तु–चि.। १४. ध्वंगा–ख. ङ. ज. चि.। १५. नाम कीर्तित–चि.। १६. तस्या–क. ग. छ.। १७. एवं मादनमित्युक्त–क. ख. ग. छ.। १८. हकार शिवसंज्ञकम्–ख. ग. ङ. छ.। १९. यंयोर्ध्वत्वे–चि.। २०. रस्य–ङ. ज., र. स–चि.। २१. सकार–क. ग. छ. चि।

**एवमेषा महाविद्या महात्रिपुरसुन्दरी ॥ ११८ ॥**
**संस्मृतैव महादेवि त्रैलोक्यवशकारिणी ।**
**एतयैतस्य चक्रस्य साधकोऽर्चनमारभेत् ॥ ११९ ॥**

---

विद्यास्तुतिः क्रियते—एवमेषेति । संस्मृतैव चिन्तितैव । जपादिवैधुर्येणेत्यर्थः । अनया चक्रार्चनमारभेदित्याह—एतयैतस्येति । एतया विद्यया ॥ ११८-११९ ॥

---

विन्दुमालिनीकार्णस्य पर्यायं परमेश्वरि ।
शक्त्योमानलार्णा ये मायाचिन्द्वीश्वरादयः ॥
यथा स्थिताश्च तत्तथ्या वाग्भवः स निराविलः ।
द्वावन्त्यौ कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ ॥ इति ॥११६-११८ ॥

एवमेषा महाविद्या महात्रिपुरसुन्दरीति । एवमेषा त्रिबीजात्मिका विद्या महाविद्या सकलविद्यानां मध्ये उत्तमा विद्येत्यर्थः । का सा विद्या ? महात्रिपुरसुन्दरीवाचिकेत्यर्थः । एवं मूलविद्यामुद्धृत्य तस्याः सामर्थ्यं वर्णयति—संस्मृतैव महादेवी त्रैलोक्यवशकारिणीति । संस्मृतैव संस्मृतिमात्रेणैव । इयं महाविद्या त्रैलोक्यं साधकस्य वशे करोतीत्यर्थः । एवमेतस्य चक्रस्य साधकोऽर्चां समारभेदिति । यस्तावदस्यां त्रैलोक्यमोहिन्यां महाविद्यायां कल्याणदेशिककटाक्षतो लब्धचतुर्विधाभिषेकः सन्ध्यातर्पणसविशुद्धात्मा लोकपालवास्तुरयासनादिसपर्यापुरस्सरं कृतन्यासमण्डलः, तस्य महात्रिपुरसुन्दर्याश्चक्रस्य अर्चां समारभेत् आरभेदित्यर्थः । तत्र सन्ध्यावन्दनन्यासमण्डलार्घशुद्धिपर्यन्तं श्रीमहात्रिपुरसुन्दरीकल्पलतायामुक्तप्रकारेण द्रष्टव्यम् । एवं मन्त्रप्रमेयनिरूपणं कृतम् । इतः परं पूजाप्रयोगमुद्रादिक्रमेण तदङ्गभूतं द्रष्टव्यम् ॥ ११८-११९ ॥

---

१. एषा विद्या–सग. । २. महेशानि–वाम. सौ. सस. । ३. एवमे–अ. म. संक. ग. । ४. कोऽर्चां स–अ. । ५. चरेत्–च. । ६. पर्यायः–क. ग. । ७. भरे–ङ., भरम्–चि. । ८. र्णास्ते–क. ग. छ., र्णाश्च–चि. । ९. नि कर्तव्या–क. ग. छ. । १०. वाग्भवं सनिलानिल–चि. । ११. नाद–क. ग. छ. । १२. निष्कलकात्मकौ–चि. । १३. बीजानां–ख. ङ. ज. । १४. 'एव' नास्ति–क. ग. छ. । १५. वशो–ख. ङ. । १६. 'कटाक्षतो' नास्ति–क. ग. छ. । १७. समर्पण–ख. ङ. ज. । १८. 'वन्दन' नास्ति–क. ग. छ. । १९. 'एवं…द्रष्टव्यम्' नास्ति–क. ग. छ. । २०. मुद्राप्रयोगे–ख. । २१. मन्तव्यम्–ङ. ज. ।

कुङ्कुमारुणदेहस्तु[1] वस्त्रारुणविभूषितः[2] ।
ताम्बूलपूरितमुखो[3] धूपामोदसुगन्धितः[4] ॥ १२० ॥
कर्पूरक्षोददिग्धाङ्गो रत्नाभरणमण्डितः[5][6] ।
रक्तपुष्पावृतो योगी[7] रक्तगन्धानुलेपनः ॥ १२१ ॥
रक्तासनोपविष्टस्तु[8] लाक्षारुणगृहस्थितिः[9] ।
सर्वशृङ्गारवेषाढ्यस्त्रिपुरीकृतविग्रहः ॥ १२२ ॥
मनःसंकल्परक्तो[10] वा साधकः स्थिरमानसः[11] ।

---

सार्धत्रिभिरर्चकस्य गुणविधिमाह—कुङ्कुमारुणेति । अत्र पूजामुखे[12] प्रायश. सर्वं वस्तुजातमरुणाधिकरणपूर्वपक्षनिर्णयवदिति[1] पिण्डार्थः[13] । रत्नाभरणं रत्नसयुक्ताङ्गदादि । योगी[14] नित्यसमावेशयुक्त । सर्वशृङ्गारवेषाढ्यः तिलकाञ्जनमृगमदा[15]द्युज्ज्वलावयवविशेष । स्थिरमानसः अचञ्चलमना[16] ।

---

कुङ्कुमारुणदेहस्त्वित्यारभ्य लेचर्या शक्तिचक्र तु क्षमस्वेति विसर्जयेदित्यन्तेषु श्लोकेषु विषमपदव्याख्या लिख्यते । कर्पूरक्षोद इति कर्पूरचूर्णम् । रक्तपुष्पावृत इति प्रथमार्थ-

---

१. देहश्च—सम. । २. वस्त्राभरण—ब., रक्तवस्त्रादिसयुत —वाग से , रक्तवस्त्रादिभूषित — सक. ख. घ. । ३. एषा पङ्क्तिर्नास्ति—ब. । ४. न्धिभि —सख. ग. । ५. रक्ता—वाक. ख. ग., रक्ता—ब. । ६. भूषित —ब. सक. ख घ. । ७. मौनी—वाक. ख ग. ब सक. ग. । ८. रक्तास्तरो—वाग. से. । ९. स्थित —वाग. सक. ग., गृहे स्थित —से. ब सख. घ. । १०. युक्तो—सग., रक्त—वाग. । ११. सुस्थिरासन —सक. । १२. मुखे—ख. । १३. विनि—ख. । १४. योगिनी—ग. घ. । १५. दाद्यु—ख. घ. । १६. अचलमना —ब., नास्ति—घ. ।

1. अरुणाधिकरणपूर्वपक्षनिर्णयवदिति । पूर्वमीमासाया तृतीयाध्याये प्रथमपादे षष्ठमरुणाधिकरणम् । अस्यायमभिप्राय —"अरुणया पिङ्गाक्ष्या एकहायन्या सोम क्रीणाति" (तै. स. ६।१।६।७) इत्यत्राऽरुणयेति तृतीयया आरुण्यगुणस्य क्रयसाधनत्व प्रतीयते । न चामूर्तस्य गुणस्य तत्सभवति । अतो वाक्यस्येहाविनियोजकत्वात् प्रकरणमेव विनियोजक ग्राह्यम् । ततश्च सोमप्रकरणे यानि ग्रहचमसादीनि द्रव्याणि सति तानि सर्वाण्यपि परिच्छिद्य तेन द्वारेणारुण्य साधन भवतीति पूर्वपक्षन्याय । तेन न्यायेनात्रापि पूजायामुक्तो रक्तवर्ण पूजासाधनसर्वद्रव्यपरिच्छेदक इत्यायाति । अतो रक्तवर्णतयोक्तान्यनुक्तानि च पूजाद्रव्याणि रक्तान्येव सपादनीयानि । इह पूर्वपक्षन्यायोऽपि निर्णयहेतुतयाऽभ्युपेयते, बाधकाभावादिति ।

भूप्रदेशे समे शुद्धे गोमयेनोपलेपिते ॥ १२३ ॥
पुष्पप्रकरसंकीर्णे धूपामोदसुगन्धिते ।
सिन्दूररजसा देवि कुङ्कुमेनाथवा पुनः ॥ १२४ ॥
आलिखेत् प्रथमं चक्रं समरेखं मनोहरम् ।
समत्रिकोणशक्त्यग्रं समाश्रमतिसुन्दरम् ॥ १२५ ॥

---

भवहिर्मुख इत्यर्थ. । उक्तं च—

"चपल. सर्वजन्तूना द्वेष्यो भवति भारत" इति ॥ १२०-१२३ ॥

पूजाचक्रविन्यासस्थलस्य गुणविधिमाह—भूप्रदेश इति । अत्र प्रदेश-शब्द. स्थलवाची । यथाह भगवान् व्यासमुनिः—

"प्रदेशेष्वपि राष्ट्राणा कृत युगमवर्तत" (म० भा० ११२०८।५) इति । समे निम्नोन्नतविवर्जिते । शुद्धे यजनार्हे । चक्रराजविन्यासद्रव्यमाह—सिन्दूरेति । पूजाचक्रविन्यासे गुणविधिमाह—आलिखेदिति । प्रथमन्यास-

---

वम्[1] । तदुक्तं [2]कुण्डगोलोन्मिश्रित गोरोचनाभावित कुङ्कुमादिपङ्कमिश्रितम् । (तेन) सर्वाङ्गमनुलिप्येति भाव: । सर्वशृङ्गारवेषाढ्य इति । शृङ्गारो भावरसस्थितिप्रेक्षणादिलक्षण. । वेष: स्त्रीरूपधारित्वम् । त्रिपुरीकृतविग्रह इति । न्यासादिना देवीवपुर्भूत्वेति भाव: । स्थिरमानस इति चित्तैकाग्र्य कृत्वेति ॥ १२०-१२३ ॥

---

१. पं-सग. । २ कौतुम्भे-सग । ३. रमम्-वाक. ख. व अ. सग. घ. । ४. कोण-अ. गघ । ५. शक्तीक-सख., शक्त्यग्र-सघ. । ६ समास्र चाति-वाग. से., सश्रीक-वाक ख. व अ. । ७. इत परम्—"हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुना । रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतम् ॥ भावयेद्धृद्यसूर्येन्दुसुतानि परमेश्वरि । अपेक्ष्य दशवार तत्सर्पयेत्तेन योगिनी ॥" इति श्लोकद्वयमधिक दृश्यते-वाग से. सक. । ८. 'उक्त च 'इति' नास्ति-ख. । ९ फलस्य-ग. । १०. स्थिर-ख. । ११. 'युक्त' नास्ति-ख. ङ. ज. । १२ णम्, अथवा पत्रलतादिलक्षणम्-ख ङ. ज. । १३. स्वेत्यर्थं-ख. ङ. ज. ।

1. "यत्तु रक्तपुष्पावृत इत्युत्तरत्र विशेषण तस्य प्राय(पाञ्च)मिककुण्डगोलोत्थपरतया साम्प्रदायिकैर्व्याख्यानाच्च पौनरुक्त्यम्" (से. पृ. ६९)

2. कुण्डगोलोन्मिश्रितमिति। अत्र अधरस्य —"अघ इति कुण्डगोलकाख्यो द्रव्यविशेष'। शक्तिसगमादिति माद्यमागतया वक्ष्यमाणात्" (पृ० १४-१५) इति, "न दस्य आन दस्य हेतुभि सुरादिभि, फलैश्च कुण्डगोलकादिभि" (पृ० १८) इति, 'विज्ञाप्य गोलक तत्र कुण्ड च तनुमध्यमे ।

**ततः पद्मनिभां देवीं बालार्ककिरणारुणाम् ।**
**जपाकुसुमसंकाशां दाडिमीकुसुमोपमाम् ॥ १३० ॥**
**पद्मरागप्रतीकाशां कुङ्कुमोदकसंनिभाम् ।**

---

किञ्च, अर्थत. सर्वज्ञतादीनि षडङ्गानि । तदुक्तम्—

सर्वज्ञता तृप्तिरनादिबोध. स्वतन्त्रता नित्यमलुप्तशक्ति. ।
अनन्तशक्तिश्च विभोर्विधिज्ञा. षडाहुरङ्गानि महेश्वरस्य ॥ इति ।
( वा० पु० १२।३३ )

शिरोललाटेति । [1]गोचरे स्वाधिष्ठाने । आधारे मूलाधारे । [2]व्यूहकं यावद् यावद् व्यूहकम्, पादतलावधीत्यर्थ. । अष्टभिः वशिन्यादिभि. । एतेषा कर-शुद्ध्यादिन्यासप्रकार. सुभगोदये द्रष्टव्य. ॥ १२६-१२९ ॥

तत इत्यादिसार्धैकोनविंशत्या ध्यानमाह । पद्मनिभामिति सकोच-विकासात्मकं धर्मद्वय लक्ष्यते । बालार्ककिरणारुणामिति रक्तवर्णत्वे प्रकाशा-त्मता लक्ष्यते सुसेव्यता च । जपाकुसुमसङ्काशामिति रक्तवर्णत्वे बहुलता

---

पद्मनिभाम् आह्लाददायिप्रभाम् । बालार्ककिरणारुणामिति । अनुमहसेव्यशोभा-मित्यर्थः । जपाकुसुमसंकाशामिति । देव्यङ्गगतारुणिमोदाहरणमिति भाव. । दाडिमीकुसुमो-पमामिति । सान्द्रप्रभामिति भाव । पद्मराग इति । अत्युज्ज्वलकान्तिमित्यर्थः ।'

१. जवा—ख. ग. घ. । २. मप्रभाम्—ख. घ. । ३. 'यावद् व्यूहक' नास्ति—ख. । ४. कमला—ग. । ५. दीना—घ. । ६. 'सकोच ' लक्ष्यते' इत्यस्य स्थाने 'रक्तवर्णत्वेऽतिस्निग्धता लक्ष्यते, प्रत्ययधर्माधर्मद्वय लक्ष्यते' इति पाठ—ग. । ७. 'क' नास्ति—घ. । ८. उक्त—ख. । ९. वेपता—ख. ग. । १०. 'जपा 'लता लक्ष्यते' नास्ति—ग. । ११. बहुलात्मता—घ. । १२. 'सेव्य' नास्ति—क. ग. छ. ।

श्रीमहात्रिपुरसुन्दरि मां रक्ष रक्षेत्येवमेव मन्त्र जातियुक्त हृदयादिषु योजयन्ति" ( से. पृ. ७६ ) ।

1. "अस्मास्तु—गोचरपदस्य लिङ्गार्थकत्व प्राचीनैरुक्त प्रमाणाभावादनादृतमभिप्रेत्य......" ( से. पृ ७७ ) ।

2 "व्यूहकं पार्ष्णिरस्याधारात् पादाग्रान्तमित्यर्थमाहु सम्प्रदायिका" ( से. पृ. ७७ ) ।

स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम्[1] ॥ १३१ ॥
कालालिकुलसंकाशकुटिलालकपल्लवाम्[2] ।
प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम् ॥ १३२ ॥
किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।
पिनाकिधनुराकारसुभ्रुवं परमेश्वरीम् ॥ १३३ ॥
आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ।
स्फुरन्मयूखसंघातविततस्वर्णकुण्डलाम् ॥ १३४ ॥
सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ।
विश्वकर्मादिनिर्माणसूत्रसुस्पष्टनासिकाम् ॥ १३५ ॥
ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम् ।
स्मितमाधुर्यविजितमाधुर्यरससागराम् ॥ १३६ ॥
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां विशालाक्षीं मृणाललसितैर्भुजैः ॥ १३७ ॥

लक्ष्यते । दाडिमीकुसुमोपमामिति रक्तवर्णत्वे प्रकाशात्मता लक्ष्यते । पद्मरागप्रतीकाशामिति रक्तवर्णत्वे वर्णप्रभयोरपृथक्ता लक्ष्यते । कुङ्कुमोदकसन्निभामिति रक्तवर्णत्वे स्निग्धता लक्ष्यते । प्रत्यग्रशब्देन प्रथमोन्मेषो लक्ष्यते ।

कुङ्कुमोदक इति । अच्छप्रभामिति भावः । प्रत्यग्रशब्देन ईषद्विकासोऽभिमतः । आदिनिर्माणमिति । प्रथमसृष्टिमिति भावः । कम्बुग्रीवामिति । कम्बुः शङ्खः, तद्वत्त्रिरेखायुक्त-

१. कालाग्नि–सख. ग. घ. । २. कुरला–वाम. से. । ३. संकुलाम्–से. । ४. मण्डिताम्–सघ. । ५. पिनाक–वाग. से. सक. । ६. भ्रूलताम्–वाग. से. ब. सक., सुभ्रुवां–सघ. । ७. संकाश–सक. । ८. विलसद्धेम–वाग. से. ब. सक. ख. घ., विततां हेमकुण्डलीम्–सघ. । स्फुरदित्यादिपङ्क्तिद्वयं विश्वकर्मादीत्यादिपङ्क्त्युत्तरं दृश्यते–सघ. । ९. विस्पष्ट–वाग. से., वत् स्पष्ट–सघ. । १०. तेष्वरोष्ठ–सक. । ११. शृङ्गार–सघ. । १२. गोचराम्–वाक. ख. । १३. अत्र–“करङ्कवाहिनेन्द्रेण दत्तताम्बूलवीटिकाम् । भुवनोत्पत्तिकल्याणकण्ठसूत्रविराजिताम् ॥ पुनरागादङ्कुशाभिसुधनुःपुष्पशरां तथा । बाहुमूलेन केयूरकटकाङ्गदशोभिताम् ॥” इति पङ्क्तिचतुष्टयमधिकं वर्तते–सक. । १४. महादेवीं–वाग. से. ब. सक. ख. ग. घ. । १५. लसितैः–ब. । १६. ‘दाडिमी…स्निग्धता लक्ष्यते’ नास्ति–ख., ‘दाडिमी…प्रकाशात्मता लक्ष्यते’ नास्ति–ग. । १७. अच्छत्व–ङ. ज. । १८. रिति–ख. ङ. ज. ।

रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ।
कराम्बुजनख[2]ज्योत्स्नाविता[3]नितनभस्तलाम् ॥ १३८ ॥
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।
त्रिवलीवल[5]नायुक्तमध्यदेश[6]सुशोभिताम् ॥ १३९ ॥
लावण्यसरिदावर्ताकारनाभिविभूषिताम् ।
अनर्घ्यरत्नघ[7]टितकाञ्चीयुक्तनितम्बिनीम् ॥ १४० ॥
नितम्बबिम्बद्विरदरोमराजि[8]वराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम्[9] ॥ १४१ ॥
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम्[11] ।
[12]नमद्ब्रह्मशिरोरत्ननिर्घृ[13]ष्टचरणाम्बुजाम्[14] ॥ १४२ ॥
शीतांशुशतसंकाशकान्तिसन्तानहा[15]सिनीम् ।
लौहित्यजितसिन्दूरज[16]पादाडिमरागिणीम् ॥ १४३ ॥
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ।
रक्तपु[17]ष्पनिविष्टां[18] तु रक्ताभरणम[19]ण्डिताम् ॥ १४४ ॥

चिबुकमित्यध[20]रमुखफलकमुच्यते । कम्बुः शङ्खः । आवर्तः पयसा भ्रमः । काञ्ची रशनादाम । अङ्कुशः सृणि । शीतांशुलौहित्येति[21]भागाभ्या जगन्मातु-

समग्रीवामिति भावः । मृणाल इति पद्मनालम् । तद्वत्कोमलदीर्घभुजलता-

१. समा-वाक. स. अ. । २. द्योत-वाक. स., ज्योतिर्वि-य सल. घ. । ३. राजि-सल. । ४. स्थलाम्-से., स्थलम्-व. । ५. सयुक्त-से. सक. । ६. शोप-सप., शीन-सप. । ७. खचित-व., छटित-सल. । ८. राज्यपरा-वाक स. राजिजिता-सघ. । ९. एतदनन्तरम्-'माणिक्यमुकुटाकारजानुद्वयविराजिताम्' इत्येषा पङ्क्तिरधिका-वाग. से. । १०. लावण्येत्यादिक श्लोको नास्ति-य. । ११. एतदनन्तरम्-'गूढ जिताम्' इत्यादिक १४६ सख्याक श्लोकोऽत्र दृश्यते-वाग. रो. सल. प । १२. ब्रह्मविष्णु-से. सव ग. घ., एषा पङ्क्तिश्च 'सर्वशृङ्गार' इत्यत पर दृश्यते-से. । १३. निघृष्ट-से सप ग. घ. । १४. एषा पङ्क्ति १४७ श्लोकानन्तरं दृश्यते-से, नास्त्येव-सल. । १५. हारिणीम्-व., हारिणीम्-सप. । १६. जपा-राग घ. । १७. पद्म-वाप. स. ग. । १८. ता-से. सघ. । १९. भूषिताम्-रो. सल. ग. । २०. परम्-स. । २१. 'मुखफलकमुच्यते' नास्ति-स. । २२. 'भागाभ्यां जग' नास्ति-स. ।

चतुर्भुजां त्रिनेत्रां[1] तु[2] पञ्चबाणधनुर्धराम्[3] ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम्[4] ॥ १४५ ॥[5]
[गूढगुल्फपदद्वन्द्वां प्रपदाजितकच्छपाम् ।][6]
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ॥ १४६ ॥
सर्वशृङ्गारवेषाढ्यां[7] सर्वालङ्कारभूषिताम्[8] ।
जगदाह्लादजननीं जगद्रञ्जनकारिकाम्[9] ॥ १४७ ॥
जगदाकर्षणकरीं जगत्कारणरूपिणीम्[10] ।
सर्वमन्त्रमयीं देवीं[11] सर्वसौभाग्यसुन्दरीम्[12] ॥ १४८ ॥
सर्वलक्ष्मीमयीं नित्यां परमानन्दनन्दिताम्[13] ।
महात्रिपुरमुद्रां[14] तु स्मृत्वावाहनरूपयाॅ ॥ १४९ ॥

रसीपोमात्मता लक्ष्यते। महामृगमदः कस्तूरिका ॥१३०-१४९ ॥

महात्रिपुरेतिद्वयेनावाहनपूजारम्भौ विधीयेते । महात्रिपुरसुन्दरीमुद्रा[15]मित्यर्थः । मृगमद इति कस्तूरिका । शृङ्गार इति पत्रलवादिकपोलालङ्कार इति भावः ॥ १३०–१४९ ॥

महात्रिपुरमुद्रा तु स्मृत्वेति । देव्यावाहनवेलायामन्तर्योगानन्तरमान्तर[16]मुद्रानवकमाधारादिब्रह्मरन्ध्रान्तनवाधारेषु परशक्तिवि[17]भ्रमरूपमनुस्मृत्यानन्तरमावाहयेदिति भाव. । सुभगे [1]नमस्कारनियुक्त्येति । सुभगे इति सुन्दरि । नम इति नमस्कारपदम् ।

१. त्रिनयना-वाग. से. । २ च-सक. ख. ग घ. । ३. बाणा-सघ. । ४. ताम्बूल-सख. । ५. एतदनन्तरम्-'करण्डवाहिनेन्द्रेण दत्तताम्बूलपत्रिकाम्' इत्येषा पङ्क्तिर्दृश्यते-वाग से. । ६. 'गूढ जिताम्' न दृश्यते-वाक. ख. । ७. वेषा-वाक. ख. ग. । ८. भरण-सख. । ९. कारिणीम्-से. सक. ख. ग. घ । १०. रूपावर-सख. । ११. वर्धिनीम्-वाग. । १२. देवीं-सग. । १३. रूपिणीम्-सक. ख., कारिणीम्-सग, एतदनन्तरम्-'एवं ध्यात्वा महादेवीं महात्रिपुरसुन्दरीम्' इत्येषा पङ्क्तिरधिका दृश्यते-सख. । १४. मुद्रया-सक., विद्यया-सख., एतदनन्तरम्-'आसनं तत्र सकल्प्य पूर्वोक्त चक्रमध्यत' इत्येषा पङ्क्तिरधिका दृश्यते-सघ. । १५. पुरसुन्दरीति-ख. । १६. 'आन्तर' नास्ति-ब ग. छ । १७. विद्या-ख. ट. ज. ।
1. "तस्मादयंरत्नावलीद्दुक्तो नमस्कारेण युक्त्येति पाठ एव स्वीकार्यं" ( से पृ. ८१–८२ ) ।

विद्ययावाह्य सुभगे नमस्कारान्तया तया।
पूर्वोक्तया साधकेन्द्रो महात्रिपुरसुन्दरीम् ॥ १५० ॥
चक्रमध्ये तु संचिन्त्य ततः पूजनमारभेत् ।
शिवाग्निविन्दवो देवि दिनकृद्वह्निविन्दवः ॥ १५१ ॥
युगपत् क्रमरूपेण योजनीया महेश्वरि ।

[1]त्रिशिखाख्या वक्ष्यमाणलक्षणाम् । नमस्कारान्तया अन्ते नमस्कारवत्या । [2]तया पूर्वोक्तया "हसबीजसमारूढाम्" ( १।१०९ ) इत्यत्र । चक्रमध्ये सर्वानन्दमयाभिधेये स्थाने। संचिन्त्य वहि. सकलीकरणादिना भावेन महाविभूतियुक्तामपि सम्यगभेदेन चिन्तयित्वेत्यर्थ. ॥ १४९-१५१ ॥

शिवाग्नीतिद्वयेन पूज्यदेवतानामादौ प्रयोज्य बीजद्वयमुद्धरति । शिवाग्निविन्दवो हकाररेफानुस्वाराः । दिनकृद्वह्निविन्दवः शकाररेफा-

कोऽभिप्रायः ? [3]आवाहनविधानन्तरं त्रिपुरसुन्दरीति संबोध्य तदन्ते नम.पदं वदेदिति भावः ॥ १४९–१५१ ॥

शिवाग्निविन्दव इति । शिवो हकार. । अग्नी रेफः । दिनकृत् शकारः । वह्निरपि रेफः । बिन्दुरनुस्वारः । ( पूर्ववत् ? ) । युगपत् क्रमरूपेणेति । उद्धृतान्यक्षराणि यथायोग-

१. रनियुक्तया—वाक. ख. अ. सख. ग घ., रादियुक्तया—वाग. से. सक. । २. पूजा समा—वाग. सज. ग. घ., एव चक्रे तु सचिन्त्य क्रमात् पूजां समारभेत्—सक. । ३. योगेन—सख. । ४. त्रिशिखा—ख. । ५. माणाम्—ख. । ६. हस—घ. । ७. वदिति—ख. ज., नास्ति—इ. ।

1. त्रिशिखाख्यामिति । ३।३–४ इत्यत्र प्रदर्शिता खण्डत्रयवती त्रिखण्डामुद्रैवात्र त्रिशिखापदेन परामृष्टा । "त्रिखण्डाख्याम्" ( पृ. ८० ) इति सेतुबन्धव्याख्यानम् ।

2. तयेति । पूर्वोक्तया "हसबीजसमारूढाम्" इत्यत्र पूर्वमुक्तया तयावाहनविद्ययावाह्येति यावत् ।

3. पूर्वोक्तावाहनविद्ययाऽन्ते नमस्कारादेनंम इहागच्छागच्छेतिवाक्यस्य योजनं कृत्वा चक्रस्य मध्ये बिन्दुस्थाने देवीमावाह्य बिन्दुस्था पुनरपि ध्यात्वा पूजामारभेतेति यथाश्रुत केचिद् व्याचक्षते । अन्ये तु महात्रिपुरमुद्रां सक्षोभिण्यादियोन्यन्तमुद्रानवकं मूलाधारादिब्रह्मरन्ध्रान्तस्थाननवके स्मृत्वावाहनविद्याया अन्ते सुभगे नम इति पञ्चाक्षरीं संयोज्य देवीमावाह्य पूजयेदित्यर्थं इत्याहु" ( से. पृ. ८०–८१ ) ।

मायार्धेन्दुसमायुक्तं बीजयुग्मं[2] यदुत्थितम् ॥ १५२ ॥
मायालक्ष्मीमयं तेन यावत्[3] पूज्यास्तु मातरः ।
अणिमां[4] पश्चिमद्वारे लघिमामपि चोत्तरे ॥ १५३ ॥
महिमां[5] पूर्वद्वारे तु ईशित्वाख्यां तु दक्षिणे ।
वशित्वाख्यां तु वायव्ये प्राकाम्यामीशदेशके ॥ १५४ ॥

---

नुस्वारः । माया ईकारः । बीजयुग्मं बीजद्वयम् । उत्थितं निष्पन्नम् । मायालक्ष्मीमयम् । मायामयं लक्ष्मीमयं भुवनेश्वरीबीजं[6] श्रीबीजं च । तेन बीजद्वयेन । यावत् पूज्यास्तु मातर इति । यावत् साकल्येन । मातरः शक्तयः ॥ १५१-१५३ ॥

षट्त्रिंशद्भिः पूजामाह—अणिमां पश्चिमद्वार इत्याँपटलान्तम् । तत्र

---

मेकशो संयोजयेत् । ह्रँ श्र इति । मायार्धेन्दुसमायुक्तमिति । माया ईकार । अर्धेन्दु कला । एतदुद्धृतबीजयुगलस्य शिरोदेशे कृते ह्रीँ श्रीँ इतिभवतीतिभाव. । मायालक्ष्मीमयमिति । उद्धृतमेतद्[12] बीजयुग्म भुवनेश्वरीलक्ष्मीबीजमित्यर्थ. ॥ १५१-१५३ ॥

अत्र पश्चिमपूर्वमिति सर्वत्र यथाक्रममेव । [1]यदा पश्चिमाभिमुख. पूजकस्तदा देवीपृष्ठत. पश्चिमं तत्पुरत पूर्वम्, यदा तु पूर्वाभिमुखस्तदा देवीपुरत. पश्चिम

---

१. कला-याग. अ से सग. । २. समुत्थित-सक., ग्न समु-राघ. । ३ पूज्यास्तत्राष्ट मातर–याव. ए अ., सपूज्या सर्वमातर–च., सपूज्या सर्वदेवता –सर । एतदनन्तरम्–'त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी । श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥ प्रकटाश्च तथा गुप्तास्तथा गुप्ततरा परा । नवधा चक्रयोगिन्यो नामभिस्ता समर्चयत् ॥' इति श्लोकद्वयमधिकम्–याग. से. । ४. अणिमामित्यादिश्लोकद्वय नास्ति–याव. ए., अस्य स्थाने ब्रह्माणीमित्यादिश्लोकद्वय वर्तते । अत्र सर्वत्र प्रथमान्त पाठ । ५ पूर्वद्वारे तु महिमा–से. । ६. ह्री–ग. । ७. स्यात्–प. । ८. अणिमामित्यादिसार्धचतुर्भिरत्रय–ग. । ९. पा–ग. ङ. ज. । १०. इत्यारीभित–क ग. [illegible] । ११. कला–क. ग. ङ. । १२. 'एतद्' नास्ति–क. ग. ङ. । १३. 'पूजक' तु पूर्वाभिमुख' नास्ति–ग. ।

१ 'अत्र देवतान्तरपूजायां निज पूजकपूजकयोर्मध्ये प्राचीति नियममेव मन्त्रतन्त्रादिष्वपि केचिदाहुः, अन्ये तु लोकसिद्धामेव प्राचीमाश्रयन्तो वदन्ति—यदा पश्चिमाभिमुख पूजकस्तदा

भुक्तिसिद्धिं तथाग्नेये[1] इच्छासिद्धिं तु नैर्ऋते ।
अधस्तात् प्राप्तिसिद्धिं तु सर्वकामां तदूर्ध्वतः[2] ॥ १५५ ॥
ब्रह्माणीं[4] पश्चिमद्वारे माहेशीमपि[5] चोत्तरे ।
कौमारीं[6] पूर्वदिग्भागे वैष्णवीं दक्षिणे तथा ॥ १५६ ॥
वाराहीमपि वायव्ये इन्द्राणीमीशदेशके ।
चामुण्डामपि चाग्नेये महालक्ष्मीं तु नैर्ऋते[7] ॥ १५७ ॥
कामाकर्षणरूपां[9] च बुद्ध्याकर्षणरूपिणीम् ।
अहङ्काराकर्षिणीं च शब्दाकर्षणरूपिणीम् ॥ १५८ ॥

त्रैलोक्यमोहनाभिधेये चतुरश्रे पूज्या. शक्तीराह—अणिमामित्यादि[12] । मन्त्र-[13]बीजरूपपूजाप्रकारौ सुभगोदये द्रष्टव्यौ ॥ १५३-१५७ ॥

सर्वाशापरिपूरकाभिधेये षोडशारे पूज्या. शक्तीराह—कामाकर्षणे-त्यादिपञ्चभि.[14] । मायालक्ष्मीकलाभिरिति[15] । माया भुवनेश्वरीबीजम्[16] । लक्ष्मी

तत्पृष्टत. पूर्वम्[17] । इतरदिङ्मुखपक्षे पूर्वाभिमुखपूजावदेव दिग्व्यवस्थेति[18] गुरुमुखाम्नाय. ॥ १५३-१५७ ॥

१. ग्नेय्या–से. । २. नास्त्येषा पङ्क्ति–वाक. ख. ग । ३ एतदनन्तरम्–“एवमेता महादेव्यो देवि सर्वार्थसिद्धिदाः ।” इत्येषा पङ्क्तिरधिका वर्तते–वाग से. सक. ख ग. । ४. ब्रह्माणी–वाक ख. । ५. माहेश्वर्यपि–वाक. ख. । ६. पूर्वे चैव तथेन्द्राणी कौमारी दक्षिणे तथा ॥ वैष्णव्यपि च वायव्ये वाराहीमीशदिग्गताम्–वाक. ख. । ७. षष्ठां देवि–वाक. ख. । ८. इत परम्–मातरष्टौ महेशानि पूजयेत् सर्वकामदा ।” इत्यधिक पाठो दृश्यते–वाग. से. सक. ख. ग. घ । ९. कामाकर्षणरूपामित्यादि शरीराकर्षिणीं तथेत्यन्त सर्वत्र प्रथमान्त पाठ–वाक. ख. । १०. पंस्व–वाक. ख. ब. । ११. पंस्व–वाक. ख. ब. । १२. अणिमा महिमेत्यादि–घ. । १३. ‘मन्त्र षोडशारे पूज्या शक्तीराह’ नास्ति–ख. । १४. ‘पञ्चभि’ नास्ति–ख. घ. । १५. मायेत्यत पूर्वम्–‘सर्वाशापरिपूरकाभिधेये षोडशदले पूज्या शक्तीराह’ इत्यधिक पाठ–ग. । १६. ह्रीं–ख. । १७. ‘तत्पुरत’ इति सर्वासु मातृकासु, स चाशुद्ध । अत्र तु सेतुबन्धाधारेण शोधित पाठ स्थापितः । १८. ‘स्या । इति मुख्याम्नायप्रकार’ इति सर्वासु मातृकासु, सेतुबन्धस्य पाठोऽत्र स्थापित ।

देवीपृष्ठत पश्चिम तत्पुरत पूर्वम्, यदा तु पूर्वाभिमुखस्तदा देवीपुरत पश्चिम तत्पृष्ठत पूर्वम् । इतरदिङ्मुखपक्षे पूर्वाभिमुखपूजावदेव दिग्व्यवस्थेति गुरुमुखाम्नाय । · ·”
( से. पृ. ८४ ) ।

तदाशाभिमुखो[1] भूत्वा त्रिपुरीकृतविग्रहः ।
बध्वा[2] तु क्षोभिणीं[3] मुद्रां विद्यामष्टशतं[4] जपेत् ॥ २३ ॥
नियोज्य[5] दहनागारे चन्द्रसूर्यप्रभाकुले[6] ।
ततो विचलितापाङ्गीमनङ्गशरपीडिताम्[7][8] ॥ २४ ॥
प्रोज्ज्वलन्मदनोन्मेषप्रस्फुरज्जघनस्थलीम्[9][10][11][12] ।
शक्तिचक्रोच्छलद्रश्मिवलनाकवलीकृताम्[13][14] ॥ २५ ॥

तद्दिङ्मुख इत्यर्थः । त्रिपुरीकृतविग्रहो मन्त्रन्यस्तशरीरः । त्रिपुराभट्टारिका[15]त्मना भावितात्मविग्रह इत्यर्थः । इदमेव[16] मुख्यं समाधानम् । इदन्तोपासनं काल्पनिकम् । तदुक्तं गीतानिष्यन्दे—

उत्सृज्या[17]त्म[18]समाधानं ये ध्यायन्त्यन्यदेवताः[19] ।
भिक्षन्ते[20] भूरिवित्तास्ते भिक्षित्वाऽपि बुभुक्षिताः ॥ इति ।

क्षोभिणी मुद्रा [1]वक्ष्यमाणा । नियोज्येति । दहनागारे अग्न्यागारे । चन्द्रसूर्यप्रभाकुले चन्द्रसूर्ययोः प्रभाभिर्व्याप्ते । अयमर्थः—[2]चन्द्रसूर्यदहनत्रिभङ्गिनि महति चक्र इति । विचलितापाङ्गीं कामविकारेण । प्रोज्ज्वलदिति[21] ।

दिङ्मुख इत्यर्थः । संयोज्य [2]दहनागार इति मूलाधारे तां साध्यां नियोजयेदित्यर्थः[22] । अथवा दहनागार इति चन्द्रसूर्यकलालयभूतं चक्रमेव । शक्तिचक्रोच्चलच्छवितवलनाकवलीकृतामिति

१. स्तीभूय–सघ. । २. विविध्य–सख. । ३. क्षोभिणी–से., मोक्षिणी–वाक. ख. । ४. मष्टोत्तरं–वाक. ख. । ५. संयोज्य–अ. । ६. कलालये–वाक. ख. ग. से. अ., कृतालया–सक., प्रभालये–सग. । ७. विह्वलिता–वाक. ख. ब. अ. । ८. पाङ्गां–सक. ख. घ. । ९. एतदनन्तरं पङ्क्तिक्रम एवम्—दूरीकृत., आकृष्ट., स्रप्र., प्रोज्ज्वल., शक्ति., नवानुराग.–से. । १०. प्रोच्छल–वाक. ख., प्रोच्चल–वाग. से., प्रचलो–सक., प्रोल्लस–सघ. । ११. प्रचल–वाक. ख., चल–सघ. । १२. स्थलाम्–वाक. अ. ब., मण्डिताम्–सघ. । १३. च्चल–वाक. से., च्चलच्छायते–वाख. ग. च. । १४. विकली–सख. । १५. रिकाभावि–ख. ङ. । १६. इदमुपासनं–ख. ङ., इदं तदुपासनं–घ. । १७. उज्झित्वा–म. । १८. त्र्य स्वपमात्मानं–चि. । १९. देवताम्–चि. । २०. भिक्षन्ति–ख. ग. घ. ङ., भिक्षित्वा–चि. । २१. 'प्रोज्ज्वलदिति' नास्ति–ख. ङ. । २२. दिति भावः–ख. ङ. ज. ।

1. तृतीये पटले ५-६ श्लोकयोर्वक्ष्यमाणेत्यर्थः ।
2. केचित्तु दहनागारशब्देन साधकस्य मूलाधारमुच्यते, तत्र योजनं साध्याया इत्याहुः । परे तु चन्द्रसूर्यकलायुक्ताग्निमण्डलं श्रीचक्रमेवेत्याहुः" ( से. पृ. ११४ ) ।

दूरीकृतस्व[1]चारित्र[2]भयलज्जान[3]याङ्कुशाम् ।
आकृष्टहृदयां नष्टधैर्या[4]मुड्डीनजीविताम् ॥ २६ ॥
व[5]प्रप्रासा[6]दनिग[7]डनदीयन्त्रसुरक्षिताम् ।
नवानुरागसन्धानकम्पमानहृदम्बुजाम् ॥ २७ ॥
मनोधि[8]कमहा[9]मन्त्रप[10]वनापहृतांशुकाम् ।
विमूढामिव विक्षु[11]ब्धामिव भ्रान्तामिव द्रुताम् ॥ २८ ॥

---

प्रोज्ज्वलताऽतिप्रज्वलितेन, प्रकर्षेणोज्ज्वलतो (वा) मदनस्य महोन्मेषेण प्रकृष्टस्फुरज्जघनस्थली[12]म् । शक्तिचक्रेति । शक्तीना चक्र शक्तिचक्रम्, तस्मादुच्चलिताना रश्मीना वलना वेष्टनम्, तेन कवलीकृतां ग्रा[13]सीकृताम् । दूरीकृतेति । चा[14]रित्रभयलज्जानया एव, अङ्कुशः अपथप्रवृत्तिनिरोधक., स दूरीकृतः परित्यक्तो यया तामिति । आकृष्टहृदयां मन्त्रप्रभावरज्जुभि. । नष्टधैर्यां मन्त्रप्रभावाहृतगर्वत्वात् । उड्डीनजीवितां गतप्रायप्राणाम् । वप्रप्रासादेति । शिलो[15]ष्टकामृत्संचितावरण व[16]प्रम् । प्रासादो भूभुजा स्थानम् । निगडं बन्धनम् । यन्त्रं भूगृहम् । तै. सुरक्षिता[17]म् । नवानुरागः प्र[18]थमराग , तस्य सन्धानेन क[19]म्पमानहृदयाम्बुजाम् । अत्राभियुक्तवचनम्—

---

[1]मूलाधारस्थदेवीमहाचक्रादु[20]च्चलच्छक्तिवागुराकवलीकृतामित्य[21]र्थ. । [22]उड्डीनजीविताम् उद्भ्रान्तजीवितामिति यावत् ॥ २०–२१ ॥

---

१. सु–सख. ग. । २. त्र्य–सख. ग । ३. मया–सक., लया–सख. ग. । ४. उत्तीर्ण–याक. ख. । ५. चक्र–सख , यत्र–य. । ६. प्राकार–याक. ख. घ. सक. ख. ग. घ. । ७. निविड–याक. ख. ब. । ८. मूत–सक. । ९. तन्त्र–सख. । १०. वेगेना–याक. ख. । ११. मिवाप्लुष्टामिव सुताम्–याक. ख., सक्षुब्धा विप्लुष्टामिव विद्रुताम्–ख., क्वा पृष्टा मदनविह्वलाम्–सख., परिमूढामिव विल्पष्टा विपृष्टामिव विह्वलाम्–सग. । १२. स्थलामित्यर्थ –ग. । १३. 'ग्रासीकृताम्' नास्ति–ख ङ. । १४. 'चारित्र' नास्ति–ख ङ । १५. शिलालोष्ट–ख. ङ. । १६. वप्र –ग. घ. । १७. तामिति–ग. घ. । १८. 'प्रथमराग ' नास्ति–ख ग ङ । १९ वेपमानहृदयाम्–ख ङ. । २०. दुच्छल–क. ग. । २१. मिति यावत्–ख. । २२. 'उड्डीन यावत्' नास्ति–ख. ।

1 "शक्तिचक्र तदीयमूलाधारम्, तस्मादुच्चलन्त्या शक्ते. कुण्डलिन्या इति केचित्" ( से. पृ ११५ ) ।

लिखितामिव निस्संज्ञामिव[1] प्रमथितामपि ।
[2]दलितामिव संभ्रान्तामिवोत्[3]त्रासमितामिव ॥ २९ ॥
वि[4]ह्वस्तामिव संकी[5]र्णा[6]मिवाकुलितमानसाम् ।
नि[6]लीनामिव निश्चेष्टामिवान्यत्वं गतामिव ॥ ३० ॥
भ्रमन्[7]मन्त्रानिलो[8]द्धूतपत्राकारां नभ[9]स्तले ।
भ्रमन्तीमानयेन्नारीं योजनानां श[10]तादपि ॥ ३१ ॥

---

न तथा सुखयत्येषा चेत[11]स्त्रिभुवनेशितो[12] ।
यथा परस्परानन्दी स्नेहः प्रथमरकयोः ॥ इति ।

मनोऽधिकेति । मनसो योऽधिको वेगः, मनोजव इति यावत् । स महामन्त्रपवनस्तेनापहृतांशुकाम् । विमूढाम् अनभिव्यक्तात्मस्वभावाम् । विक्षुब्धाम् आविलमानसाम् । श्रान्ताम् [13]अप्रत्यभिज्ञातस्वरूपत्वाच्चिरं खिन्नाम् । द्रुतां द्रवीभूताम् । लिखितां चित्रस्थि[14]ताम् । निस्संज्ञां मूर्च्छां गताम् । प्र[15]मथितां विलोलिताम् । विह्वस्तां [16]परवशाम् । संकी[17]र्णां प्रति[18]पत्तिरहिता वि[19]कीर्णावयवाम् । आकुलितमानसां [20]प्रस्तुतविस्मृतमानसाम् । निलीनामिव निश्चेष्टामिवान्यत्वं गतामिवेति[21] । निलीनाम्[22] अनुद्योगाम् । निश्चे[23]ष्टां मृतप्रायाम् । अन्यत्वं गता, नेयं सा, अन्यैवेयमिति द्रष्टृभिश्चिन्त्यमानाम् । भ्रमन्निति । भ्रमन् परि[24]भ्रमन्, मन्त्र एवानिलो मन्त्रानिलः[25], [26]तेनोद्धूतस्य उत्कम्पितस्य

---

१. मति-ग्क. । २. "दलितामिव शलीनामिवाकुलितमानसाम् । सलिलामिव संभिन्नामिवाकुलितविग्रहाम् ॥ एवं मन्त्रानिलोद्भ्रान्तपत्राकारा नभस्तले ।" इति श्लो पाठव्यत्यासः—ग., गलिता—ग. से. । ३. वोद्वासरिता—वाग. से. ब. सल. । ४. गलिता—वाग. ग., दलिता—सल., गलिता—ब. । ५. संभिन्ना—शाव. ख । ६ नास्त्येषा पङ्क्तिः—वाक. ख. ग. घ. अ. । ७. भ्रमा—वाग. से. सर. । ८. दुभ्रान्त—वाक. ख. अ., दुद्धूतपत्रा—वाग. से. । ९. स्थले—वाग. से. सल. । १०. शतैरपि—वाग. से. । ११. चास्त्रि—ग । १२. शितुः—ख. ङ. । १३. प्रत्यभिज्ञातस्वरूपा च—च ङ. । १४. स्थाम्—ग. घ. । १५. अप्रम—ग. घ. । १६. विप्रतिपत्तिरहिताम्—ख. ङ. । १७. सङ्कीर्णा—ग. घ. ङ. । १८. 'प्रतिपत्तिरहिता' नास्ति—ख. ङ. । १९. विकीर्णा—ख. ग. ङ. । २०. 'प्रस्तुतविस्मृतमानसाम्' नास्ति—ख. ङ. । २१. 'इति' नास्ति—घ. । २२. नामिव—ग. । २३. निश्चेष्टा नाम मृतप्राया—ग. । २४. 'परिभ्रमन्' नास्ति—ग. ङ. । २५. 'उद्धूतपत्राकारा' इत्यधिकं—ग. । २६. 'तेन' नास्ति—घ. ।

अथवा मातृकां सर्वां लिखित्वा चक्रबाह्यतः ।
धारयेद् बाहुमूले येस्त्ववध्यः सर्वजन्तुषु ॥ ३२ ॥

---

पत्रस्य पर्णस्याकार इव या कम्पते ताम् । [२]अत्र नभस्तल इत्यस्याय भाव — मन्त्रपवनप्रकम्पि[३]ता निरालम्बना भ्रमन्तीमिति । आनयेत्, साधक इति शेप. । योजनानां शतादपीत्यस्मिन्नर्थे मन्त्रो[४]ऽयमाथर्वण [१]—"यदि वसे[५]ति योजनशते नदीना वा ग[६]तान्तरः" इति ॥ २०-३१ ॥

अथवेति निपातसमुदायोऽयशब्दार्थ. प्रयोगान्तरारम्भे । अयमर्थ[७].— चं[८]क्रस्य बाह्यदेशे चक्रोपरि[८]लिप्तमकारादिक्षकारान्तान् वर्णान् विन्यस्य प्रोक्त-क्र[९]मेमावध्य प्रोक्तस्थाने प्रोक्तफलसिद्धयै धारयेदिति ॥ ३२ ॥

---

[१०]अथवेत्यादि सर्वजन्तुष्वित्यन्तस्यायमर्थः—[२]भूर्जपत्रे चन्दनागुरुकर्पूरपङ्केन श्रीचक्रं लिखित्वा तस्य म[११]ध्ये त्रिकोणमध्ये लिखितमूलविद्याह्रकारमध्येऽमुकं र[१२]क्षे रक्षेति साधक-नाम लिखित्वा चक्रचतुरश्रयाह्य[१३]तः परिवेपक्रमेण मातृकां लिखित्वा सितसूत्रेण वेष्टयित्वा गुटिकां कृत्वा पञ्चगव्यपञ्चामृतस्नापनान्ते प्राणान् प्रतिष्ठाप्य संपूज्य मूलविद्यामष्टो-त्तरशतादि स्मरन् यथाशक्ति जपित्[१४]वा शुभेऽहनि धारयेत् ।

---

१. प. सोऽवध्य—वाल. से. ध. सक. ग., शु सोऽवध्य—पस. । २. 'अत्र' नास्ति—ख. ङ., 'अत्र'''इति शेष' नास्ति—घ. । ३. म्पिता'''म्बना'''तीति—ख. । ४. मन्त्रो यथा दर्पण —ख. ङ. । ५. वसन्ती—ग. । ६. गतान्तर —ग. घ. । ७. 'चक्रस्य' नास्ति—ख. ङ. । ८. लिप्त—ग., लिप्त—घ. । ९. माबध्य—घ., कर्माबध्य—ख. ङ. । १०. 'अथवे ''अर्थ' नास्ति—ग. । ११. 'मध्ये' नास्ति—ख. ङ. ञ. । १२. 'रक्ष' नास्ति—क. ग. छ. । १३. इतः परम्—"प्राणप्रतिष्ठा । प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुस्सामाथर्वणानि छन्दांसि सकलजगत्सृष्टिस्थितिसंहारकारिणी परा प्राणशक्तिर्देवता आं ह्रीं क्रों बीज स्वाहा शक्तिः प्राणप्रतिष्ठार्थे विनियोग । रक्ताब्धिपोताहणपद्मसस्था पाशाङ्कुशाविक्षुशरान् सबाणान् । शूल कपाल दधतीं कराब्जै रक्ता त्रिणेत्रा प्रणमामि देवीम् ॥ इति । तत" इत्यधिक पाठ—क. ग. छ. । १४. जपित्वा—ख. ङ. ।

1. एतद्वचनमथर्ववेदे न दृश्यते । श्रीकण्ठ्यां पठितेषु चतुष्षष्टितन्त्रेष्वेका आथर्वणसंहिता । तत्र यमेतद्वचनं स्यात् ।
2. "अत्र नामलेखनादीनिकर्तव्यतविस्तरो ग्रन्थविस्तरैकप्रयोजनकोऽर्थरत्नावल्यां द्रष्टव्य" ( मे. पृ. ११५ ) ।

---

अत्र प्राणप्रतिष्ठाप्रकारो लिख्यते—दीर्घषट्स्वरभेदितेन मायाबीजेन कराङ्ग-न्यासं कृत्वा पाशाङ्कुशाभयवरोद्यतकरां रक्तालङ्कारवसनां प्राणदूतीपरिवृतां रक्तां शक्ति-मात्मानं ध्यात्वा मूलाधारान्मूलशक्तिमुत्थाप्य प्रवहणनाड्या निस्सार्य साध्यवामनाड्या तस्य भ्रूमध्यं भित्वा सुषुम्नापथेन[1] हृत्कमलं प्रवेशयित्वा[2] तद्गताष्टपत्रकर्णिकायां निषण्णान् भ्रमराकृतीन् साध्यप्राणान् शक्तितन्तुप्रविद्धान्[3] स्वप्राणदूतीभिराकृष्याकृष्य गुलिकायां संस्थाप्य प्राणप्रतिष्ठामनु जपित्वा स्वात्मशक्तिं स्वात्मनि[4] समाहरेत्। प्राणदूत्यो यथा—

मृता वैवस्वता चैव जीवहा प्राणहा तथा।
आकृष्या[5] प्रैथना चैव[6] प्रमादा विस्फुलिङ्गिनी॥
क्षेत्रज्ञप्रतिहारी[7] च प्राणदूत्यो[8] नव स्मृताः। (प्र० सा० ३५।१२)

ओँ[9] ह्रीँ क्रोँ यं रं लं वं शं षं सं हं ळं क्षं सं हं सः[10] अमुष्य प्राणा इह प्राणाः। पुनरपि पाशादि हंसोन्तम् अमुष्य जीव इह स्थितः। पुनः पाशादि हंसान्तम्[11] अमुष्य सर्वेन्द्रियाणि। पुनः पाशादि हंसान्तम् अमुष्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा मयि जीव इह स्थितो मयि सर्वेन्द्रियाणि मयि वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहायान्तु सुखं चिरं तिष्ठन्तु स्वाहा। प्राणप्रतिष्ठामन्त्रः। अथवा स्त्रीसाध्य[12] आत्मानं कामेश्वरं ध्यात्वैवं[13] कुर्यात्[14]। पुंसाध्ये कामेश्वरीं[15] ध्यात्वैवं[16] कुर्यादिति। आकृष्ट्यादिषट्कर्मसु भ्रमर-प्रयोगपूर्वकं[17] साध्यप्राणान् प्रतिष्ठाप्य स्पृशन् अष्टोत्तरशतादिक्रमेण यथाशक्ति जपेत्। स्वपरार्थरक्षासु[18] सर्वत्र गुटिकां स्पृशन् भ्रमरप्रयोगं विना तत्तद्देवतासन्निधानार्थं तत्तद्देवता-नामपूर्वकं प्राणप्रतिष्ठामन्त्रं यथाशक्ति जपेत्। नवनीतघृतादिष्वात्मोपभोग्यवस्तुष्वा-कर्षणवशीकरणविविधप्रयोगेषु[19] भ्रमरप्रयोगपूर्वकं साध्यप्राणान् प्रतिष्ठाप्य सहस्रादि-क्रमेण स्पृशन् प्राणप्रतिष्ठामन्त्रं जपित्वा प्रयुञ्ज्यात्। ततोऽभीष्टसिद्धिर्भवति॥ ३२॥

---

१. पथेन–ङ. ज.। २. भेदयित्वा–ख.। ३. तन्तुप्रविष्टान्–क, मार्गप्रविष्टान् प्राण–ख. ङ. ज.। ४. स्वस्थाने–ख. ङ. ज.। ५. ग्रसना–ख. घ. ङ. ज.। ६. पश्चात् प्रथमा–ख. ङ. ज.। ७. क्षेत्रप्रतिहृतेत्येता–ख. घ. ङ. ज., क्षेत्रजा प्रतिहारी च–छ.। ८. दूत्यश्च यादिका–मु.। ९. 'ओं ह्रीं…प्रतिष्ठामन्त्र' इत्यस्य स्थाने 'ओं ह्रीं क्रों इत्यादि प्राणप्रतिष्ठामन्त्र' इत्येव पाठ–ख. ङ. ज.। १०. हंस. सोहं–ग.। ११. सोहमन्तम्–छ.। १२. ध्यात्वे–ख. ङ. ज.। १३. त्वेतत्–क. ग. ङ. छ.। १४. कामेश्वरोत्थ–क. ग. छ.। १५. ध्यायेदिति–क. ग. ङ. छ. ज.। १६. कान्–ख. ङ. ज.। १७. स्वपरमात्म–ख. ङ. ज.। १८. 'ष्वात्मो…र्भवति' इत्यस्य स्थाने 'ष्वात्मप्रयोगवस्तुषु भक्षणवशीकरणप्रयोग. सभ्रमरसप्राणं जपं युञ्ज्यात्' इति पाठ–ज.। १९. विविध…भवति' इत्यस्य स्थाने 'प्रयोग' सभ्रमरसप्राण जप्त्वोपयुञ्ज्यात्' इत्येव पाठ.–ख. ङ.।

तथैव[1] हि महेशानि स्वसंज्ञाक्रमयोगतः ।
चन्दनागुरुकर्पूरैरजरामरतां लभेत्[2] ॥ ३३ ॥
एवं[3] देवि विधानेन रोचनागुरुकुङ्कुमैः[4] ।
लिखितं चक्रयोगेन[5] यस्मिन् कस्मिन्नपि स्थितम् ॥ ३४ ॥
साध्यनाम स्वनाम्ना तु चक्रस्यान्तर्विदर्भितम् ।
करोति सकलान्[7] लोकानचिरात् पादवर्तिनः ॥ ३५ ॥

---

तथैव पूर्ववत् । समातृकावर्णं चक्रं विलिख्य स्वसंज्ञाक्रमयोगतः स्वस्य साधकस्य सज्ञाक्षरमन्त्राक्षरक्रमयोगत इत्यर्थः ॥ ३३ ॥

चक्रयोगेन चक्रविन्यासयोगेन । यस्मिन् कस्मिन्निति[11] । देश इति पूर्यम् । चक्रस्यान्तर्विदर्भितमित्यस्यायमर्थः—चक्रस्य मध्ये सकामराजबीजे साध्यसाधकनामाक्षराणां यथायोगं विदर्भेण स्थितमिदं[12] चक्रमिति । लोकान् जनान् । पादवर्तिनः पादस्थानीयान्[13] ॥ ३४-३५ ॥

---

तथैवेत्यारभ्य अमरतां लभेदित्यन्तस्यायमर्थः—स्वसंज्ञाक्रमयोगत इति पूर्ववच्चक्रं लिखित्वा चक्रनाम्नातो मातृकालेखनसमये प्रत्यक्षरं साधकनामाद्यक्षरान्तरितं[14] लिखेदिति विशेष ॥ ३३ ॥

एवं देवीत्यारभ्य पादवर्तिन इत्यन्तेनैतदभिप्रेतम्[15]—एवमिति पूर्ववच्चक्रलेखनमुक्त[16] सूचितम् । अत्रायं विशेषः—मूलविद्यां[17] हकाररेफयोर्मध्ये साध्यसाधकयोर्विदर्भितं नाम लिखित्वा तत्रैव चर्म लिखेत् । तत्रापि साधकस्य[18] नामाक्षरद्वयं साध्यना[19]( म ? म )[illegible]मेकमिति विशेषः । वश्यकर्मणि[20] प्रस्तुतत्वाल्लेखनद्रव्यविशेषोऽप्युक्तः । मातृकाक्षरवेष्टनं साधकनामाद्यक्षरयोगेन । ( एव ? एव ) विदर्भविधिः । साध्यसाधकनामविलेखने सर्वत्रायमेव विधिः ॥ ३४-३५ ॥

---

१ तथैव—चाख. । २. लभेत्—चाग. सं. । ३. एतदेव—चाक. ग. से. । ४. चन्दना—च. । ५. क्रम—च. । ६. तस्मिन्—चाक. ख. । ७. सकल लोकम—चाक. ख. । ८. नम्—चाक. ख. । ९ यन्ति—घ. । १०. चक्रविन्यासयोगेन—ग. । ११ 'इति' नास्ति—ख. ङ. । १२. 'इद' नास्ति—ख. ग. ङ. । १३. दास—ग. घ. । १४. साध्य—ङ. । १५. मतम्—ङ. ज. । १६. लेखमुक्त सचिन्त्य—ङ. । १७. विद्यायां—ग. ज. । १८. कनामा—ङ. ज. । १९ साध्या—ङ. । २०. वश्यस्य—ङ. ज ।

मध्यंगतेन बीजेन महाकामकलात्मना ।
एकमेकमवष्टभ्य[2] साध्यनामाक्षरं प्रिये ॥ ३६ ॥
बहिरप्यखिलैरेवं[3] वेष्टयेन्मातृकाक्षरैः ।
हेममध्यगतं[4] कृत्वा धारयेद् वामके भुजे ॥ ३७ ॥
शिखायामथवाऽस्यादौ[5] धारयेद्यत्र तत्र वा ।
करोति दासभूतं तत्त्रैलोक्यं[6] सचराचरम्[7] ॥ ३८ ॥

---

मध्यंगतेन चक्रमध्यत्रिकोणगतेन। [1]महाकामकलात्मना "बिन्दुं संकल्प्य" ( १।१८५ ) इत्युक्तस्वभावेन ईकारात्मना । अवष्टभ्य आत्मीकृत्य । बहिः चक्रात् । हेममध्यगतं[8] हेमपट्टमध्यगतम् । चक्रमिति शेषः । शिखायां चूलीतले । अथवाऽस्यादौ धारयेद् यत्र तत्र वेति । अस्यादौ[9] खड्गादौ । यत्र[10] तत्र वेति । महानसकोशगृहादिदेश इत्यर्थः । करोति दासभूतं तत्त्रैलोक्यं

---

मध्यंगतेनेत्यादि चक्ररूपिणीत्यन्तेनैतदभिप्रेतम्—[1]मूलविद्यामध्यगतमहाकामराजबीजानन्तरं साध्यनामाद्यक्षरं[11] पुनः कामराजबीजं तदन्ते साध्यनामद्वितीयाक्षरम् । एवं क्रमेण यावन्नामपरिसमाप्त्यवष्टभ्य तन्महाचक्रमध्यत्रिकोणे सर्वमेतल्लिखित्वा तत्रैव त्रिकोणान्तरे[12] मातृकया वेष्टयेत् । अत्रावष्टम्भशब्देन प्रथनमभिप्रेतम्[13] । तदुक्तम्—

---

१. रमनः–सक. । २. मेव–सखं. । ३. रेवं–सग., लिखेदेवं–सख. । ४. गतां–वार. ग. । ५. वस्त्रे–वाक. ख. ग. से. ब. अ. सक. ख. ग. घ. । ६. हि–वाक. ख. ग. से. अ. ब. सक. ख. ग. घ. । ७. नास्त्येषा पङ्क्तिः–सख. । ८. 'हेममध्यगतं हेमपट्टमध्यगतम्' नास्ति–ख. ङ. । ९. 'अस्यादौ' नास्ति–ख. ङ. । १०. 'यत्र तत्र वेति' नास्ति–ख. ङ. । ११. नामाक्षरं–ख. ङ. ज. । १२. णान्तराले मातृकां वे–ख. ङ. ज. । १३. हितम्–क. ग. छ., मतम्–ख. ज. ।

1. "महाकामकलात्मकं बीजं चतुर्थस्वरस्तेन मध्यंगतेन त्रिकोणान्तर्लिखितेन साध्यनामाक्षरमेकमवष्टभ्य संपुटीकृत्य बहिश्चकार्याष्टवयोनिचक्राद् बहिर्मातृकाभिर्वेष्टयेदिति तु विमर्शिन्यां व्याख्यातम् । रत्नावलीकारस्तु मध्यंगतेन मूलविद्यामध्यस्थेन बीजेन कामराजकूटेन साध्यनामाक्षराणि प्रथयित्वा त्रिकोणान्तर्विलिख्य बहिः कामकूटाद्बहिस्त्रिकोणमध्य एव मातृकाभिः साध्यनामाक्षरप्रथनरीत्यैव वेष्टयेदिति व्याचख्यौ" ( से. पृ. ११६ ) ।

संमोहयति राजानं वाजिनं दुष्टकुञ्जरम् ।
चौरं केसरिणं सर्पं परतन्त्रं महाबलम् ॥ ३९ ॥
शत्रुं वज्राशनिं शस्त्रं डाकिनीं शाकिनीं तथा ।
भूतप्रेतपिशाचांश्च धारिता चक्ररूपिणी ॥ ४० ॥
तेन क्रमेण संदर्भ्य पुराणां नाम सुन्दरि ।
मध्ये चतुष्पथे वापि चतुर्दिक्षु निधापयेत् ॥ ४१ ॥

---

[1]सचराचरमित्यत्र तच्छब्दश्चक्र परामृशति । परतन्त्रं परसैन्यम् । महाबलमिति तन्त्रविशेषणम् । वज्राशनिमिति । [2]वज्रं वर्जनात् । यत्र पतति तद्वर्जयतीति । तादृशीमशनिमित्यर्थः । धारिता चक्ररूपिणीति । देवतेति शेषः ॥ ३६–४० ॥

तेन क्रमेण पूर्वोक्तप्रकारेण । सन्दर्भ्य ग्रथयित्वा । पुराणां प्रसिद्धानां नगरीणाम् । नाम संज्ञा । मध्ये पुराणाम् । चतुष्पथे रथ्याचतुष्टयसन्धौ ।

---

"मथनं चाक्षरं प्रति"[3] इति । तत्रापि मातृकावेष्टं(ने ? नं) साध्यकनामाद्यक्षरैर्योगेनैव कार्यम् ॥ ३६–४० ॥

तेन क्रमेणेत्यादि ईश्वरीत्यन्तेनैतदभिप्रेतम्—तत्रापि मध्यमबीजेन पुनर्नामा-

---

१. देवेति–ख. । २. चक्र–वाग. । ३. सर्व–से. । ४. परमन्त्रमहाग्रहम्–वाक. ख. ग., परचक्र–वाग. से., परमन्त्र–सख. ग. । ५. दाभून्–से., शक्र–सख., शक्ति–सग. । ६. वेताल राक्षस–वाग. से., शाकिनीं राक्षसीं–च. सक. ख. ग. । ७. प्रेतभूत–सख. । ८. चक्रेण–वाक. ख. । ९. सदध्यात्–सख. । १० वापि–से., देवि–सख. । ११. श्चक्रराज–ग. । १२. पर्जन्यात्–ख. । १३. तादृश–ख. ङ. । १४. 'नाम संज्ञा । मध्ये पुराणाम्' नास्ति–ख. ङ. । १५. अत्रापि–ख. ज. । १६. मातृकया–ग. छ. । १७. नेऽपि–ख. ङ. ज. । १८. साध्य–क. ग. छ. । १९. क्षरं–ङ. । २०. मतम्–ङ. ज. । २१. त्रिपुरा नामा–क. ख. ग. घ. ङ. ज. ।

1. "सचराचरमित्यत्र तच्छब्दश्चक्र परामृशतीति विमर्शिन्यामुक्त तदयुक्तमिति" ( से. पृ. ११७ ) । अत्रेदमवधेयम्—सेतुबन्धे 'करोति दासभूतं हि' इति पाठः, ऋजुविमर्शिन्यां [illegible] 'करोति दासभूतं सन्' इति ।
2. "वर्जयति वियोजयति प्राणैः" ( ३।११।४ ) इति निरुक्तव्याख्यायां दुर्गाचार्यः ।
3. १५० पृष्ठस्या २ संख्यात्र टिप्पणी द्रष्टव्या ।

महान्[1] कोलाहलस्तत्र ततो लोकस्य जायते ।
योषितां च[2] विशेषेण विद्विष्टानाम्[3]पोश्वरि[4] ॥ ४२ ॥
एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।
चतुःसमुद्रपर्यन्तां ज्वलन्तीं चापि[5] चिन्तयेत् ॥ ४३ ॥
षण्मास[6]ध्यान[7]योगेन जायते मदनो[8]ऽपरः ।
दृष्ट्यै[9]वाकर्षयेल्लोकं[10] दृष्ट्यैव कुरुते वशम्[11] ॥ ४४ ॥
दृष्ट्या क्षोभ[12]यते नारीं दृष्ट्या[13] संहरते विषम् ।

---

चतुर्दिक्षु पुराणां चतुराशासु । निधापयेत् निखा[14]नयेत् । महान् अनल्पः । कोलाहलः क्षोभात्मा । तत्र तासु पुरीषु । लोकस्य जनस्य । तत्रत्यानां जनानां परस्परक्षोभो भवतीति भावः । विद्विष्टानां परस्परं कृतवैराणाम् ॥ ४१–४२ ॥

एतन्मध्यगतामित्यत्रैतच्छब्दश्चक्रराज[15]परामर्शकः । वनं जलम् । ज्वलन्तीं चक्रप्रभाकवलितत्वात्[16] । मदनः कामः । अपरो द्वितीयः । दृष्ट्या करोति

---

क्षरमथनं कार्यमिति विशेषः । अन्यन्मातृकावेष्टनादि समानमिति । सन्दर्भावष्टम्भावेकार्थावि[17]ति ॥ ४१-४२ ॥

एतदित्यादि नाशयते क्षणादित्यन्तः स्पष्टार्थः । तत्राप्येतदिति श्रीचक्रमभिमतम् ॥ ४३–४६ ॥

---

१. महाहल्लोहलो वैषि–वाक. ल., महाकोलाहलस्तत्र–सख. ग., त्सेषु–सक. । २. सु–राख., चा–सग. । ३. त्पद्दष्टा–याक. ख. घ. अ. । ४. मां महे–सष. । ५. चिन्तयेत् प्रिये–चाग. से., चिन्तयेत्ततः–ब. सक. ख. ग. । ६. षण्मासान्–वाम. से. । ७. काल–सग. । ८. नोपमः–याक. ल. ब. अ. । ९. श्लोकद्वये सर्वत्र 'दृष्ट्वा' इति पाठ–चाग. से., दृष्ट्याकर्षयते–व., दृष्ट्वा कर्षयते–सख., दृष्ट्वा आक–सग. । १०. लोकान्–चाग. से. सक. । ११. वशे–याग. से. । १२. संक्षोभयेन्नारीं–चाग. से. सक. ग. । १३. दृष्ट्वैवापहरेद्विषम्–चाग. से., दृष्ट्यापहरते विषम्–व. सक. ग., दृष्ट्वा–सख. । १४. 'निखानयेत्' नास्ति–ल. ट. । १५. भ्रकं परामृशति–ल. ट. । १६. कवलीकृतत्वात्–ल. ट. । १७. वेय कार्याविति–क. ख. ग. ट. छ. ।

दृष्ट्या करोति वागीशं[1] दृष्ट्या सर्वं[2] विमोहयेत् ॥ ४५ ॥
दृष्ट्या करोति चावेशं दृष्ट्या सर्वं विमोचयेत् ।
दृष्ट्या चातुर्थिकादींश्च[3] नाशयेदचिराज्ज्वरान्[4] ॥ ४६ ॥
एतत्प्रपूजितं रात्रौ[5] चक्रं[6] सिन्दूरचित्रितम् ।
करोति महदाकर्षं[7] सुदूरादपि[8] योषिताम्[9] ॥ ४७ ॥
सर्वदिक्षु[9] विदिक्ष्वेवं यदा[10] देवी प्रपूज्यते[11] ।
दिगनुक्रमयोगेन तदा सर्वं जगद्वशे ॥ ४८ ॥

---

वागीशमिति । मूकमपि जनमनुग्रहदृष्टिपातेन सरस्वतीनृत्तगीत[12]रङ्गं करोतीत्यर्थः ॥ ४३–४६ ॥

एतदित्यादि[13] । [1]सिन्दूरचित्रितं रात्रौ प्रपूजितं महदेतच्चक्रं सुदूरादपि योषितामाकर्षं करोतीत्यन्वयः । तदा सर्वं जगद् वशे । भवतीति शेषः ॥ ४७–४८ ॥

---

एतदित्यादि सुदूरादपि योषितामित्यन्तेन [1]सिन्दूररजसा श्रीचक्रं[14] लिखित्वा तन्म-(ध्य?ध्ये)[15] त्रिकोणमध्ये (प्रथ)मं मूलवि(द्या ? द्या) ततः संबोधनान्तं देवीनाम पुनर्लिखि-त्वा[16]ऽर्थादेतन्मध्ये आकर्षणकर्मवत् सर्वं[17] नामादिकं लिखित्वा रात्रौ पूजयेदित्यभि-मतम् ॥ ४७ ॥

१. चावेशं–वाक. ख. ग. । २. सर्वं विमोचयेत्–वाग. से. सर्वं विमोहयेत्–ब. । ३. इयेकाहि–सग. । ४. द्विषमज्वरान्–वाग. से. साग. ज्वराग्नाशयते क्षणात्–अ. ध. सक. ख. । ५. देवि–ब. सन., घन–सख. । ६. सिन्दूरेण विचित्रितम्–वाक. ख., चक्र सिन्दूररञ्जितम्–वाग. से., निशि सिन्दूरचित्रितम्–ब. सत., चर्चितम्–सक., चक्र सिन्दूरचर्चितम्–सग. । ७. स महाकर्षं–सग. । ८. दूरस्थायाश्च योषित–सख., सुदूरादेव–सग. । ९. सदा–वाग. अ. से. ब. साग., एतद्–सक. । १०. यथा देवि–वाक. ख., यदा देवी–सख. । ११. जपेत्–साग. । १२. 'गीत' नास्ति–ग. घ. । १३. एतदिति–ख. घ. ङ. । १४. इत परम्–'प्रथ्य हरिद्रादि तेन चक्र' इत्यधिक पाठ–ख. ग. छ., ५८ श्लोकस्यमेतद्व्याख्यानमनवधानादत्र स्थापितम् । १५. 'तन्मध्ये – र्थादि' नास्ति–ख. ङ. ज. । १६. र्थादित–क. ख. ग. घ. ङ. ज. । १७. सर्वनामादि–क. ग. छ. ।

1 'तेन हरिद्रादिना विलिख्य सिन्दूर पूरयेदिति व्याख्यानमनादेयम्' ( से. पृ. ११८ ) ।

भूर्जपत्रे विलिख्यैतन्नवे निर्विवरोदरे ।
रो[1]चनागुरुकाश्मीरैर्मध्ये संदर्भयेत्[2] पुरम् ॥ ४९ ॥
विपुलं देशमथवा विष[3]यं मण्डलं त[4]दा ।
स्वनामस[5]हितं कृत्वा यदि भूमौ निधापयेत् ॥ ५० ॥
धारयेदथ[6]वा हस्ते क[7]ण्ठे वा [8]भुजमूलतः[9] ।
शि[10]खायामथवा वस्त्रे यत्र यत्र स्थितं च वा ॥ ५१ ॥
चक्रमेतन्महाभो[11]गे पुरक्षोभणमुत्तम[12]म् ।

भूर्जेति । एतत् चक्रं । नवे नूतने । निर्विवरोदरे अच्छिद्रे । काश्मीरं कुङ्कुमम् । मध्ये चक्रस्य । संदर्भयेत् पुरमिति । पुरादीनां नामाक्षराणि यथा संदर्भितानि ग्रथितानि भवन्ति तथेति । स्वनामसहितं साधकसंज्ञाक्षर-संयुक्तम् । अयमर्थः—चक्रराजम[13]ध्ये त्रिकोणोदरलिखित[14]काम[15]राजबीज[16]गर्भ-गृहे पुरादीनां नामाक्षराणि सा[17]धकनामाक्षरैः संदर्भितानि लिखेदिति । पुरक्षोभणं पु[18]राणां क्षोभणमित्यर्थः ॥ ४९-५२ ॥

सर्वेत्यादि जगद्वश इत्यन्तेन श्रीचक्रमध्ये साध्यसाधकयोर्नाम वशीकरणवह्निलिखित्वा पूर्वादि[19]क्रमेणैवाभिमुखः पूजयेत् । अ[20]त्र साध्यना[21]म[1] दिङ्नामैवेति सूचितम् ॥४८॥

भूर्जपत्र इत्यादि उत्तममित्यन्तेनैतदभिप्रे[22]तम्—श्रीचक्रमध्ये त्रिकोणमध्यलिखित-त्रिधारेफहकारमध्ये पुरादिना(म) साधकनामाक्षरग्रथनयोगेन लिखित्वा कर्म लिखे-दिति यावत् ॥ ४९-५२ ॥

१. समालिख्य रोचनागुरुकुङ्कुमैः—याक. ख. भ. घ. ग्रेषु संलिख्य—सग. । २. संदर्भ-येत्तस्य मध्ये नगरं वाथवा पुरम्—याक. ख. सक. घ. । ३. विपुले—सक. । ४. च वा-थाक. ख., तथा—याग. से. ब. सक. । ५. रहित—याक. ख. । ६. ऊरुलके—सक. । ७. केयूरे वा शिखापक्के—सक. । ८. बाहु—याग. से. सग. । ९. बाहुमूलेऽ—सक. । १०. वा रोचयेन्मनः—सक. । ११. देवि—सल. ग. । १२. हेतुकम्—सग. ग. । १३. मध्य—ख. घ. ङ । १४. विलसित—ख. ङ., 'लिखित' नास्ति—ग. । १५. 'बीज' नास्ति—ख. ङ. । १६. 'गर्भ' नास्ति—घ. । १७. साधकाना नामा—ग. । १८. 'पुराणां क्षोभणमित्यर्थः.' नास्ति—ख. ङ. । १९. क्रमेण पूर्वाभि—ङ, क्रमेणाभि—ज. । २०. तत्र—ङ. ज. । २१. नामादिना—ख. ङ. ज. । २२. मतद्—क. ग. छ. ।
1. "अत्र दिङ्नामैव साध्यनामेत्याहुः" ( से. पृ. ११८ ) ।

अर्कक्षीरं कुङ्कुमं[1] च धत्तूरकरसं[2] तथा ॥ ५२ ॥
रोचनालक्तकं लाक्षारसं मृगमदोत्कटम्[15] ।
एकीकृत्य[3] चक्रमेतल्लिख्यते[19] यस्य संज्ञया ॥ ५३ ॥
तस्य चोरग्रहव्याधिरिपुसिंहाहिर्वारिजम्[8] ।
यक्षराक्षसवेतालभूतप्रेताशुभात्मनाम्[9] ॥ ५४ ॥
लूंताद्युश्चिककीटानां कामलाशीतिकोद्भवम्[10] ।
भयं न विद्यते[11] तस्य[12] परमन्त्राभिचारजम्[14] ॥ ५५ ॥

अर्कक्षीरमित्यादि । धत्तूरकरसम् उन्मत्तपुष्परसम् । अलक्तकलाक्षयोरवान्तरभेदो द्रष्टव्य. । मृगमदोत्कटम् । मृगमदः कस्तूरिका, तयोत्कटम् उद्रिक्तम् । संज्ञया नाम्ना । ग्रहः सूर्यादि. । व्याधिः आध्यात्मिकादिदु.खत्रयात्मा । वारिजं जलनिमित्तज भयम् । यक्षराक्षसवेतालभूतप्रेताशुभात्मनामिति । यक्षादिप्रेतान्ताना पञ्चानामन्येषामशुभात्मनामपीत्यर्थः । लूतेत्यादि । लूतादिकीटान्ताना त्रयाणा संबन्धि भयम्, कामलोद्भव भयं शीतिकोद्भवं भयं चेत्यर्थ. । तस्य साधकस्य । परमन्त्राभिचारजं भयमित्यस्यायमर्थ. —परेषा

अर्कक्षीरेत्यादि सर्वेत्यन्तप्रयोगे रक्षाकर्मवन्नामकर्म लिखेत् ॥ ५२–५६ ॥

१. कुसुम–सख. । २. समम्–च. । ३. कृत्वा–से. च. सक. ख. । ४. कमेणंत–च. । ५. लित–सक. । ६. दिय–मध., दिय–सग. । ७. हिंसानिवारणम्–सक., हिंसाभिचारजम्–सग. । ८. वाजिजम्–वाघ. से., वाजिनाम्–वाक. ग. । ९. मुलीयडाकिनीदुष्टचेतसाम्–वाक. ख., भूतप्रेतपिशाचजम्–वाग. से., हिंसाभिचारजम्–सख. । १०. लूतादिगर्दभज्वाला तथा शीतलिकोद्भवम्–वाक.ख., ज्वालागर्दभलूतादि–च. सग., लूतागर्दभविस्फोटज्वाला–वाक., भूतादिडामरोद्भूत–सख. । ११. षोडपते–सक. । १२. वश्य–सक. । १३. तथा–सग. । १४. जम्–वाक. ख., रिकम्–च. । १५. 'मृगमदोत्कटम्' नास्ति–ख. ङ. । १६. अनेकेषामशु– ख. ङ. । १७. भूतादीति–ध., नास्ति–ख. ङ. । १८. 'शीतिकोद्भव भय' नास्ति–ख. ङ. । १९. कर्मयल्लिखेत्–ट. ख., कर्मलेखनम्–च. ग. छ. ।

नित्यसन्धारणाच्चा[3]पि कालमृत्युयमादयः ।
न शक्ता हिंसितुं सम्यग् रोमै[4]कमपि सर्वदा[4] ॥ ५६ ॥
अ[5]थवा म[6]ध्यगां देवीं त्रिकोणोदरगां तथा ।
अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमाङ्कि[8]ताम् ॥ ५७ ॥
कुर्या[9]द्यस्तु च सप्ताहाद्[10] दासवत् किङ्करो भवेत् ।

---

श[11]त्रूणां संबन्धि मन्त्रसाधिताभिचा[12]रजं भयमिति[13] । नित्यसंधारणात् [14]चक्रराजस्य ॥ ५२–५६ ॥

अथवेति । मध्यगां महाच[15]क्रमध्यशक्तिमध्यस्थानगताम् । देवीं मन्त्ररूपिणीम् । [1]त्रि[16]कोणोदरगां कोणत्रयोदरगताम् । [2]तथा य[17]था मध्ये त[18]था कोणत्रये[19]ष्वपीत्यर्थः । अधस्ताद् बीजचतुष्टयाधःस्थाने । नामसंयुक्तां साध्यसाधककर्माक्षरसंयु[20]क्ताम् । अयमर्थः—प्रथममुक्तद्रव्यैर्महाचक्रं विन्यस्य मध्यशक्तिस्थानमध्यभागे श्रीकामराजं विलिख्य कोणत्र[21]ये तदेव बीजं निष्पाद्य तद्बीजचतुष्टयाधस्ताच्छन्दलक्षितान्तःप्रदेशे

---

अथवा मध्यगामित्यादि किङ्करो भवेदित्यन्तस्यायमर्थः—[22]श्रीचक्रत्रिकोणमध्ये श्रीत्रिपु[23]रसुन्दरीरूपं विलिख्य कोणत्रयलिखितमूलविद्याहकारमध्ये पूर्ववत् सा[24]धकस्य साध्यस्य देव्या नाम संबोधनपूर्वकं लिखित्वा कर्म लिखेदित्यर्थः ॥ ५७–५८ ॥

---

१. नित्यं–से. सम. । २. हंवि–वाम. से. व. । ३. वालै–सक. । ४. सर्वथा–वाम. अ. से. य. सक. ख. ग. । ५. अथ मध्यगतां–व. । ६. मध्यगो–वाम. से. । ७. भयगां–वाक. ख. ग. से. व. अ., भयतस्तया–सख. । ८. ल्वितम्–मख. । ९. नियापयेच्च–वाम. से. ब. सक. ख. ग. । १०. दर्वाम् वै–सक. । ११. 'शत्रूणां' नास्ति–ख. ङ. । १२. रजातं–ग. घ. । १३. मित्यर्थः–घ. । १४. चक्रस्य–ख. ङ. । १५. शक्तिमध्यचक्र–ख. ङ. । १६. 'त्रिकोणोदरगां' नास्ति–ख. ङ. । १७. 'यथा' नास्ति–ग. घ. । १८. 'तथा' नास्ति–ग. घ. । १९. ष्वित्यर्थः–ग. घ. । २०. सहिताम्–ख. ङ. । २१. त्रयेऽपि–ख. ङ । २२. 'श्री' नास्ति–क. ग. छ. । २३. देवीरूपं–ख. ङ. ज. । २४ साधकसाध्यनाम देवीनाम–ख. ङ. ज. ।

1. "त्रिकोणोदरगामिति क्वाचित्कः पाठः" ( से. पृ. ११९ ) ।
2. "त्रिकोणस्य कोणत्रये मध्ये चेति चतुर्वारं विद्यां विलिख्य तदधः स्थानचतुष्के साध्यनामापि पुनः पुनर्लिखेदिति व्याचक्षते । कामकूटं चतुर्वारं लिखेदित्यपि केचित्" ( से. पृ. ११९।) ।

**पीतद्रव्येण वा[9]लिख्य धार[10]येदुज्जिघृक्षताम्[1] ॥ ५८ ॥**
**नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ।**
**महानीलरसेनापि नाम संयोज्य पूर्ववत् ॥ ५९ ॥**
**दक्षिणाभिमुखो वह्नौ दग्ध्वा तं मारयेत् क्षणात् ।**

---

अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ।
अन्तरामिथियो कर्म साधकाशे समालिखेत् ॥
(प्र० सा० १०।५५-५६)

इति स्थित्या साध्यसाधककर्माक्षराणि लिखित्वा सप्राणप्रतिष्ठ यथोक्तमाराध्योक्तस्थाने निधापयेदुक्तफलसिद्धय इति । दासवत् किङ्करो भवेत् । साध्य इति शेष ॥ ५७-५८ ॥

पीतद्रव्येण हरिद्रादिना । उज्जिघृक्षताम् उदग्रहणिका चिकीर्षूणाम् । नाम्ना संज्ञया । अयमर्थ —विवदिषूणा प्रयोगकरणे प्रतिविवदिषोर्नाम्ना सहित चक्रं विलिख्य तान् विवदिषून् तच्चक्रं धारयेदिति । अत्राभियुक्तवचनम्—

स्तम्भे कालनिभ प्रोक्त मारणे चासित तथा ।
सुसित शान्तिकर्मादौ वश्ये रक्त समन्तत ॥ इति ।

---

पीतद्रव्येत्यारभ्य मूको भवति तत्क्षणादित्यन्तस्यायमर्थ —पीतद्रव्य हरिद्रादि, तेन चक्र लिखित्वा तन्मध्ये त्रिकोणमध्ये प्रथम मूलविद्या तत सबोधनान्त देवीनाम पुनरमुकस्य वाच स्तम्भयेति, अन्तेऽपि मूलविद्येत्येवं लिखेत् ॥ ५८-५९ ॥

[11]महानीलरसेनेत्यादि मारयेतऽचिरादित्यन्तेनैतदभिप्रेतम्—तस्य महाचक्रस्य मध्ये पूर्ववन्मूलविद्या लिखित्वा ततो देवीनाम सबोधनान्तं लिखित्वाऽमुकं मारय[12] मारयेति [13]लिखेदित्यर्थ ॥ ५९-६० ॥

---

१ अङ्कितं लिखितं नित्य-चाग से. । २. वालिख्य-ख. सख. । ३. धारयेदिदृक्षिणताम्-चाक ख., धारणात्रयमुत्तमम्-सघ । ४. नीली-वाग. मे अ. सक. ग. । ५ मारयते-चास. सं. क. अ. सच. ख. ग. । ६. ऽचिरान्-अ. सक ग., रिपून्-व । ७ 'साधक' नास्ति-ख. । ८. सात्-ख. घ. ङ । ९ वाऽदौ च-ग. घ. । १०. 'पीत लिखेत्' नास्ति-च. ग. छ., अत्रस्थानि कानिचन पदानि क७ भ्रोष्य्याप्यायां लिखितानि । ११. 'महानीली' नास्ति-क. ग. छ. । १२. 'मारय' नास्ति-ङ. ज. । १३. चालि-ख. छ. ज. ।

1 'वर्वाविदिग्द्रदिङ्मुण इति मूलपाठ" ( से. पृ. ११९ ) ।

महिषाश्वपुरीषाभ्यां गोमूत्रे[१]णाङ्कितं लिखेत् ॥ ६० ॥
ना[२]मारनालमध्यस्थं विद्विष्टः सर्व[३]जन्तुषु ।
[४]युक्त्वा रोचनया नाम काकपक्षे[५]ण संलिखेत् ॥ ६१ ॥

---

मूको ग्रासवाङ्निरोधः । तत्क्षणात् प्रयोगकालाविलम्बितमेव ॥ ५८–५९ ॥

महानीलरसेन महानीलपङ्केन । इदमेवास्याभिधानम् । तत्तद्देश-[६]भाषाया नामान्तरं श्रोतव्यम् । नाम साध्यस्य । पूर्ववत् वाक्स्तम्भचक्र-[७]क्रमवत् । दग्ध्वा नीलपटादौ लिखितम्[1] । मारयेत् [2](मारय)त्याख्यातप[८]द-द्वयोपेतं प्रतिष्ठितप्राणं तच्चक्रं वह्नौ दग्ध्वा साध्यं मारयेदित्यर्थः ॥५९-६०॥

[3]महिषाश्वपुरीषाभ्यामित्यनेन चक्रनिर्माणद्रव्यमुच्यते । गोमूत्रेण सेचनकेन । अङ्कितं [4]विद्वेष(य)युगाक्षरैः । नाम साध्यस्य संज्ञाक्षरम् । आरनालमध्यस्थं [१०]काञ्जिकमध्यस्थम् । कुर्यादिति शेषः ॥ ६०–६१ ॥

---

[१७]महिषाश्वेत्यादि विद्विष्टः सर्वजन्तुष्वित्यन्तेनैतदभिप्रेतम्—विद्वेषणं यथा म[११]हा चक्र-मध्ये त्रिकोणमध्ये मूलविद्याङ्कितं साध्यसाधकयोर्नाम कर्मसहितं लिखेत् । [१२]प्रथमं मूल-विद्या पुनरमुकामुकयोर्विद्वेषणं [१३]कुरु कुर्विति लिखित्वा [१४]ततो मूलविद्या पुनरपि नाम पूर्ववत् । पुनरपि [१५]मूलविद्या । [१६]एवमङ्कितं निरोधितं लिखेदिति यावत् ।[3] महिषाश्वपुरीषादि-गोमूत्रैरिति सहजवैरिजीवयोः पुरीषमूत्रैर्विद्वेषणयन्त्रं लिखेदित्यर्थः ॥ ६०–६१ ॥

---

१ षादिगोमूत्रैर्नाम टङ्कितम्–अ. सक. ख. ग. । २. त्रेण समङ्कितम्–वाक. ख. । ३. क्षिप्त्वा–वाक. ख. गग. । ४. वानल–सग., वालस्य–सक. । ५. युक्तं–अ. सक. ख. ग. । ६. पक्षस्य मध्यगम्–वाक. ख. ख. ब. । ७. भाषया–ग. घ. । ८. 'क्रम' नास्ति–ख. ङ. । ९. 'पद' नास्ति–ग. घ. । १०. 'काञ्जिकमध्यस्थम्' नास्ति–ग. । ११. 'महा' नास्ति–ङ. । १२. अथवा–ख. ज. । १३. 'कुरु' नास्ति–ङ. ज. । १४. पुनः–ङ. ज. । १५. 'मूल' नास्ति–क. ग. छ. । १६. एवं टक. ग. छ. । १७. 'महिषा·····लिखेदित्यर्थः' नास्ति–ग. ।

1. नीलपटादौ लिखितं दग्ध्वेत्यर्थः ।
2. मारय मारय इत्येवमाख्यातपदद्वयोपेतमित्यर्थः ।
3. "महिषाश्वेति तु मिथो वैरस्य गोव्याघ्रादेरुपलक्षणमित्यन्ये । पुरीषद्वयमेव लेखनद्रव्ये । गोमूत्रेण तु चक्रस्य सेचनमात्रमित्यपि केचित्" ( से. पृ. १२० ) ।
4. विद्वेषय विद्वेषय इत्येवं युगाक्षरैरित्यर्थः ।

पीते[1]द्रव्येण वा[2]लिख्य धा[3]रयेदुज्झिघृक्षताम्[1] ॥ ५८ ॥
नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ।
महानीलै[4]रसेनापि नाम संयोज्य पूर्ववत् ॥ ५९ ॥
दक्षिणाभिमुखो वह्नौ दग्ध्वा तं मा[5]रयेत् क्ष[6]णात् ।

---

अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ।
अन्तरामिथ्रियोः कर्म साधकाशे समालिखेत् ॥
(प्र० सा० १०।५५–५६)

इति स्थित्या साध्यसा[7]धककर्माक्षराणि लिखित्वा सप्राणप्रतिष्ठं यथोक्तमाराध्योक्तस्थाने निधापयेदुक्तफलसिद्धय इति । दासवत् किङ्करो भवेत् । साध्य इति शेषः ॥ ५७–५८ ॥

पीतद्रव्येण हरिद्रादिना । उज्जिघृक्षताम् उद्ग्रहणिकां चिकीर्षूणाम् । नाम्ना संज्ञया । अयमर्थः—विवदिषूणा प्रयोगकरणे प्रतिविवदिषोर्नाम्ना सहितं चक्रंविलिख्य तान् विवदिषून् तच्चक्रं धारयेदिति । अत्राभियुक्तवचनम्—

स्तम्भे कालनिभं प्रोक्तं मारणे चासितं तथा ।
सुसितं शान्तिकर्मादौ वश्ये रक्तं समन्ततः ॥ इति ।

---

पीतद्रव्येत्यारभ्य मूको भवति तत्क्षणादित्यन्तस्यायमर्थः—पीतं[10]द्रव्यं हरिद्रादि, तेन चक्रं लिखित्वा तन्मध्ये त्रिकोणमध्ये प्रथमं मूलविद्या ततः संबोधनान्तं देवीनाम पुनरमुकस्य वाचं स्तम्भयेति, अन्तेऽपि मूलविद्येत्येवं लिखेत् ॥ ५८–५९ ॥

म[11]हानीलीरसेनेत्यादि मारयतेऽचिरादित्यन्तेनैतदभिप्रेतम्—तस्य महाचक्रस्य मध्ये पूर्ववन्मूलविद्यां लिखित्वा ततो देवीनाम संबोधनान्तं लिखित्वाऽमुकं मा[12]रय मारयेति [13]लिखेदित्यर्थः ॥ ५९–६० ॥

१. अङ्कुना लिखिता नित्य–वाम सै. । २. सलिख्य–अ. सख. । ३. धारयेद्विन्नदिग्गताम्–वाम स., धारणात्रयमुत्तमम्–सघ. । ४. नीलो–वाम. से. अ. सक. ग. । ५. मारयते–वाम. से. ब. अ. सक. ख. ग. । ६. ऽचिरान्–अ. सक. ग., रिपून्–य । ७. 'साधक' नास्ति–ख. । ८. तान्–अ. घ. ङ । ९. वादी च–ग. घ. । १०. 'पीत'' लिखेत्' नास्ति–क. ग. छ., अत्रत्यानि कानिचन पदानि ४७ श्लोकव्याख्यायां लिखितानि । ११. 'महानीली' नास्ति–क. ग. छ. । १२. 'मारय' नास्ति–क. ज. । १३. चालि–ख. ङ. ज. ।

1. "सर्वविदिन्द्रविद्गुप्त इति मूलपाठ." ( मे. पृ. ११९ ) ।

**महिषाश्वपुरीषाभ्यां गोमूत्रेणाङ्कितं लिखेत् ॥ ६० ॥**
**नामारनालमध्यस्थं विद्विष्टः सर्वजन्तुषु ।**
**युक्त्वा रोचनया नाम काकपक्षेण संलिखेत् ॥ ६१ ॥**

---

मूको ग्रस्तवाङ्निरोधः । तत्क्षणात् प्रयोगकालाविलम्बितमेव ॥ ५८-५९ ॥

महानीलरसेन महानीलपङ्केन । इदमेवास्याभिधानम् । तत्तद्देशभाषया नामान्तरं श्रोतव्यम् । नाम साध्यस्य । पूर्ववत् वाक्स्तम्भचक्रक्रमवत् । दग्ध्वा नीलपटादौ लिखितम्[1] । मारयेत् [2](मारय)त्याख्यातपदद्वयोपेतं प्रतिष्ठितप्राणं तच्चक्रं वह्नौ दग्ध्वा साध्यं मारयेदित्यर्थः ॥५९-६०॥

[3]महिषाश्वपुरीषाभ्यामित्यनेन चक्रनिर्माणद्रव्यमुच्यते । गोमूत्रेण सेचनकेन । अङ्कितं [4]विद्वेष(मय)युगाक्षरैः । नाम साध्यस्य संज्ञाक्षरम् । आरनालमध्यस्थं काञ्जिकमध्यस्थम् । कुर्यादिति शेषः ॥ ६०-६१ ॥

---

महिषाश्वेत्यादि विद्विष्टः सर्वजन्तुष्वित्यन्तेनैतदभिप्रेतम्—विं पणं यथा मेहे चर्ममध्ये त्रिकोणमध्ये मूलविद्याङ्कितं साध्यसाधकयोर्नाम कर्मसहितं लिखेत् । प्रथमं मूलविद्या पुनरमुकामुकयोर्विद्वेषणं कुरु कुर्विति लिखित्वा ततो मूलविद्या पुनरपि नाम पूर्ववत् । पुनरपि मूलविद्या । एवमङ्कितं निरोधिनं लिखेदिति यावत् । महिषाश्वपुरीषादिगोमूत्रैरिति सहजवैरिजीवयोः पुरीषमूत्रैर्विद्वेषणयन्त्रं लिखेदित्यर्थः ॥ ६०-६१ ॥

---

१ यादिगोमूत्रैर्नाम टङ्किनम्-अ. मक. ख. ग. । २. त्रेण समङ्कितम्-खाक. ख. । ३. लिप्त्वा-खाक. ख. सग. । ४. वानल-मग., वारम्य-मख. । ५. युक्तं-अ. गक. ख. ग. । ६. पक्षस्य मध्यगम्-खाक. ख. अ. ब. । ७. भाषया-ग. घ. । ८. 'क्रम' नास्ति-घ. ङ. । ९. 'पद' नास्ति-ग. घ. । १०. 'काञ्जिकमध्यस्थम्' नास्ति-ग. । ११. 'महा' नास्ति-ङ. । १२. अथवा-ख. ज. । १३. 'कुरु' नास्ति-ङ. ज. । १४. पुनः-ङ. ज. । १५. 'मूल' नास्ति-क. ग. छ. । १६. एवं टक. ग. ङ. । १७. 'महिषा......लिखेदित्यर्थः' नास्ति-ग. ।

1. नीलपटादौ लिखितं दग्ध्वेत्यर्थः ।
2. मारय मारय इत्येवमाख्यातपदद्वयेनेत्यन्वयः ।
3. "महिषाश्वेति तु मिथो वैरस्य गोव्याघ्रादिद्वन्द्वस्योपलक्षणमित्यर्थः । पुरीषद्वयमेव लेखनद्रव्ये । गोमूत्रेण तु चक्रस्य सेचनमात्रमित्यपि केचित्" ( से. पृ. १३० ) ।
4. विद्वेषय विद्वेषय इत्येवं युगाक्षरैरित्यर्थः ।

नीलकर्पटके सम्यङ्नीलसूत्रेण वेष्टयेत् ।
लम्बमानं तदाकाशे[2] उच्चाटनकरं परम्[3] ॥ ६२ ॥
दुग्धलाक्षारोचनादिमहानीलरसादिभिः[4] ।
लिखित्वा धारयेद् देवि चातुर्वर्ण्यं वशं नयेत्[7] ॥ ६३ ॥

---

युक्त्वा । उच्चाटनयुगेन[1] योजयित्वेति यावत् । नाम साध्यस्य । काकपक्षेण लेखन्या । नीलकर्पटके कृष्णपटे । वेष्टयेत् बध्नीयात्[8] । तद् चक्रम् ॥ ६१–६२ ॥

दुग्धेति । दुग्धं क्षीरम् । चातुर्वर्ण्यं जातिचतुष्टयम् । [2]द्रव्यचतुष्टयेन वर्णचतुष्टय[9] वशीकुर्यादिति तात्पर्यम् ॥ ६३ ॥

---

[10]युक्त्वा रोचनयेत्यादि उच्चाटनकरं परमित्यन्तस्यायमर्थः—गोरोचनया काकपक्षेण[11] नीलकर्पटकस्य[12] मध्ये चक्रं विलिख्य तन्मध्ये आद्री साध्यनाम द्वितीयान्तं लिखित्वा[13] उच्चाटय उच्चाटयेति कर्मपदान्ते मूलविद्यां लिखेदिति यावत् ॥ ६१–६२ ॥

दुग्धलाक्षेत्यादि चातुर्वर्ण्यं वशं भवेदित्यन्तस्यायमर्थः—लाक्षाशब्देन ज(तुरु?तु)च्यते । [15]अत्र चक्रनामादिलेखनं वशीकरणकर्मवज्ज्ञातव्यम् ॥ ६३ ॥

---

१. एतन्नीलीपटे–सख ग. । २. तदा कार्यं–सक, हृदाकाशे–सख. । ३. परमुच्चाटनं भवेत्–वाग से., उच्चाटयति तत्क्षणात्–सक । ४. नाभिर्भं–से. ब. सख. । ५. नीलीरसेन च–वाग. से. सख. ग., नीली–ब सक । ६. च्चाग्र–वाग. से । ७. भवेत्–अ से. ब. सख., भवेद्ध्रुवम्–साग. । ८. 'वेष्टयेत् बध्नीयात्' नास्ति–ख. ङ. । ९. 'वर्णचतुष्टय' नास्ति–ख. ङ. । १०. 'युक्त्वा यावत्' नास्ति–ग. । ११. पक्षस्य–ग. ङ. ज. । १२. 'नीलकर्पटकस्य' नास्ति–ख. ङ. ज. । १३. लिखित्वा–ख. ङ. ज. । १४. त्वात्र–ख. ङ., त्वात्रोच्चाटयेति–ज. । १५. अत्रापि–ङ. ज., इत परम्–'नाम्ना विना ध्यानेनैव' इत्यधिक पाठ –क. ग. । स चाप्रासङ्गिक इव, ७१ श्लोकस्य नाम्नेति-पदव्याख्यायां स्थापयितुमर्हः ।

1 उच्चाटय उच्चाटय इत्येवमुच्चाटनयुगेनेत्यर्थः ।
2 "एतेन चत्वारि द्रव्याणि चतुर्णां वर्णानां वशीकरणे यथासङ्ख्यमन्वियन्तीति विमर्शिनीकारोक्तिर्निरस्ता" ( से. पृ १२० ) ।

एतेनैव विधानेन जलमध्ये यदा क्षिपेत् ।
सौभाग्यमतुलं तस्य स्नानपानादिना भवेत् ॥ ६४ ॥

---

एतेनैवेति । एतेन अनन्तरोक्तविधिना । जलमध्ये वारिधान्याम् । क्षिपेत् । चक्रमिति शेषः । तस्य साधकस्य । आदिशब्देन मुखसेचनं लक्ष्यते । अत्रेदं सूचितम्—दीक्षाशब्दितनैमित्तिकाद्यभिषेकसमये[1] चक्रं कनकपट्टे विलिख्य भूत(प्र?ल)स्थितमहाचक्रमध्यस्थितस्य सकूर्चासनस्य सनवरत्नस्य वासोयुगावृतमुखस्याश्वत्थादिस्त(म्व?व)कालङ्कृतस्यान्तर्निहितकूर्चस्याभिषेककुम्भस्योदरे प्रक्षिप्य सेचनक्रियानन्तरं कुम्भादिभिः सह तत्कनकयन्त्रं प्राणदात्रे गुरवे सदक्षिणं दद्यात् साधक इति । अत्राभियुक्तोक्तिः—

अभिषिच्य यन्त्रकलशं गुरवे प्रददातु संयतमतिः सुमतिः ।
दुरितापनोदविधये द्युतये यशसे श्रियै च मतिसंयतये ॥
( प्र० सा० २१।५२ )

अभिषिच्य पुनः शिष्यं कुम्भादीन् गुरुराहरेत् ।
( प्र० सा० ३१।२४ )

प्राणप्रदानकर्त्रे न च कार्यं वित्तशाठ्यममलधिया ॥ इत्यादि ॥६४॥
( प्र० सा० २५।१९ )

---

एवमेवेत्यादि ■ संशय इत्यन्तस्यात्मरक्षाकर्मयन्त्रामलेखनम्, चक्रलेखनं तु दुग्धलाक्षादिभिरेव कार्यमित्यर्थः ॥ ६४ ॥

---

१. एतदेव–वाक. ख., एवमेव–अ. सग., एतद्द्वेवि–सक. । २. विनिक्षिपेत्–वाल. से. ब. सक. ख., यदि क्षिपेत्–सग. । ३. मुत्तमं–च. । ४. लोके–सख., देवि–सग. । ५. पानाश्च संशय–वाक. ख. अ. । ६. 'अत्रेदं'''इत्यादि' नास्ति–ख. ड. । ७. युगलावृताश्वत्या–ग. । ८. विलिख्य–घ. । ९. 'अभिषिच्य' इत्येष श्लोको नास्ति–ग. । १०. स्यायमयं श्रात्म–ख. ड. ज. ।

1. "यत्तु विमर्शिन्यामुक्तं दीक्षाभिषेकसमये कनकपट्टचक्रं कुम्भे निक्षेप्यम् । अभिषेकोत्तरं च तच्चक्रं गुरवे देयमित्ययमर्थोऽनेन लब्ध इति, तत्तन्त्रान्तरे ■ दृष्टम्" ( से. पृ. १२१ ) ।

एतन्मध्यगतां देवि नगरीं वा वराङ्गनाम् ।
सप्ताहात् क्षोभयेत् सत्यं ज्वलमानां विचिन्तिताम् ॥ ६५ ॥
महापातकयुक्तात्मा यदि देवि प्रपूजयेत् ।
शमीदूर्वाङ्कुराश्वत्थपल्लवैरथवाऽर्कजैः ॥ ६६ ॥
मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।
लिखित्वा पीतवर्णं तु चक्रमेतद्यदाऽर्चयेत् ॥ ६७ ॥

---

एतदित्यादि । देवीत्यामन्त्रणम् । एतच्चक्रमध्यगतां मध्यभागस्थिता शक्त्युदरविलिखितमध्यबीजमध्यगताम् । ज्वलमानां मन्त्रपावकशिखया । विचिन्तितां तामुक्तकाल[12] ध्याताम् ॥ ६५ ॥

महापातकेति । अत्रापि देवीत्यामन्त्रणे[13] । महापातकयुक्तात्मा महद्भि पातकैर्युक्तोऽहमिति[14] मन्यमान । प्रपूजयेत् । चक्रमिति शेष । शमीति । पल्लवशब्द शम्यादिभिश्चतुर्भि सवद्धयते । अर्कजैः अर्कपल्लवै । [1]पुष्पस्याप्युपलक्षणमेतत् । कलुषम् एनः । सप्तजन्मकृतमिति प्राचीनानन्त[15]कोटिजन्मकृतपापोपलक्षणम् । नरः साधक ॥ ६६–६७ ॥

---

एतदित्यारभ्य विचिन्त्य तामित्यन्त स्पष्टार्थं । एतदित्यत्रापि[16] चक्रमुच्यते । अत्र नाम्ना विना ध्यानेनैव साधनमभिप्रेतम् ॥ ६५ ॥

महापातकेत्यादि[17] नर इत्यन्त सर्वपापप्रायश्चित्तप्रदर्शक. स्पष्टार्थ ॥ ६६–६७ ॥

---

१. अथवैनद्गतां–सम्ब. । २. देवीं–वाग. से. सत । ३. नागरीं–वाग. से सत. ग. । ४. वा गुरा–वाग से, वानुराङ्गनाम्–सम्ब. ५. सम्यग–मक. सद्य–सत. । ६. न्य ताम्–वाक ख. अ. न्यपन–मक., न्तयेन–मग. । ७. देवीं–वाग. से सत. ग । ८ महा–वाग्व से. । ९. वर्णेन–वाग. से । १०. च–अ. सत. । ११. चक्रमध्ये तथा–मक. । १२. काल–ग. घ ट. । १३. नम्–घ. ग. ङ. । १४. त्तमिति–ख. ङ. । १५. 'कोटि' नास्ति–ग. ङ. । १६. 'एत प्रतम्' नास्ति–ग. ङ. । १७. 'महा स्पष्टार्थं' नास्ति–ग. ङ. ।

1 "अत्र अर्कमिति तु तत्पुष्पस्याप्युपलक्षणमिति वदन्ति" ( से पृ १२१ ) ।

पूर्वाशाभिमुखो भूत्वा स्तम्भयेत् सर्ववादिनः ।
सिन्दूररेणु[1]लिखितं पूजयेदुत्तरामुखः ॥ ६८ ॥
[2]यदा तदाऽस्य[3] वशगो लोको भवति सर्वदा[4] ।
[5]गैरिकेणैतदालिख्य पूजयेत् पश्चिमामुखः ॥ ६९ ॥
स[6] च सर्वाङ्गनाकर्षवश्यक्षोभकरो भवेत् ।
दक्षिणाभिमुखो भूत्वा कृष्णवर्णं[7] यदाऽर्चयेत्[8] ॥ ७० ॥
यस्य[9] नाम्ना तस्य नित्यं मन्त्रहानिस्तु जायते ।

---

पीतवर्णं तालहरिद्रादिभिः । सिन्दूररेणुलिखितम् । चक्रमित्यध्याहार्यम् । गैरिकेण धातुना । एतत् चक्रम् । यः साधकः । कृष्णवर्णम् । यस्य साध्यस्य[10] । नाम्ना संज्ञया । तस्य साध्यस्य[11] । तद्वद् यथा[12] दिङ्मुखः साधयति ।

---

लिखित्वेत्यादि वादिन इत्यन्तस्यायमर्थः—हरिद्रोन्मत्तहरितालपङ्केन श्रीचक्रं लिखित्वा तन्मध्यकोणे वादिनाम[13] आद्यन्तमूलविद्यारोधितं पूर्ववल्लिखित्वा पूजयेदिति यावत् । सिन्दूरेत्यादि भवति सर्वदेत्यन्तः[14] सर्ववश्यप्रयोगयन्त्रामलेखनादिसहितो ज्ञातव्यः । चक्रमित्यारभ्य क्षोभकरो भवेदित्याकर्षणयन्त्रामादिसहितो ज्ञातव्यः । दक्षिण इत्यादि जायत इत्यन्तस्यायमर्थः[15]—महानीलीरसादिना चक्रं लिखित्वा तन्मध्ये श्रीमूलविद्यान्तेऽमुकस्य मन्त्रहानिं कुरु[16] कुर्विति लिखित्वा[17] पूजयेदित्यर्थः । तद्वदित्यादि कारकमित्यन्त-

---

१. रेणाप्युल्लिखित—से., रेणादि—ब., रेणाद्द—सक., रलेख—साव. । २. यदि सदास्य—सग. । ३. मु—सक. । ४. सर्वथा—अ. से. ब. सग. । ५. चक्रं गैरिकमालिख्य—थाक. ख., गैरिकेण तदालिख्य—से. । ६. सोऽपि—बास. से., यतः—सग., योऽसौ—ब., तदा—सक. । ७. कृष्णं चक्रे समर्चयेत्—वाग. से. । ८. सम—सक. ख. । ९. तस्य—सख. । १०. साधकस्य—ख. ङ. । ११. साधकस्य—ग. । १२. यथा महादिङ्—ग. घ. । १३. 'वादिनाम' नास्ति—ख. ङ. ज. । १४. त्यन्तं पूर्वं—ख. ङ. ज. । १५. इतः परम्—'नीलीरसादि द्रव्यं हरिद्रादि तेन चक्रं लिखित्वा तन्मध्यत्रिकोणमध्ये मं मूलविद्या, ततः संबोधनान्तं देवीनाम पुनरमुकस्य वाचं स्तम्भय स्तम्भयेति, अन्ते मूलविद्या इत्येवं लिखेत् । महानीली···रमुकस्य वाचं स्तम्भय स्तम्भयेति, अन्ते मूलविद्या इत्येवं लिखेत्' इत्यधिकः पाठः—ङ., स चात्रानावश्यकः, पूर्वं स्तम्भनप्रकरणे ५८ श्लोकव्याख्यायामस्य पाठस्य विद्यमानत्वात् । १६. 'कुरु' नास्ति—ङ. ज. । १७. आलिख्य—क. ख. छ., आरभ्य—ङ ज. ।

तद्वद् दिगन्तरालेषु पूजितं परमेश्वरि[2] ॥ ७१ ॥
स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकारकम् ।
रोचनालिखितं देवि दुग्धमध्ये वशङ्करम् ॥ ७२ ॥
[ क्षिप्तं[3] गोमूत्रमध्ये वा शत्रूच्चाटनकारकम् ।
तक्रमध्यगतं चक्रं विद्वेषणकरं परम् ॥ ]
ज्वलज्ज्वलनमध्यस्थं सर्वशत्रुविनाशनम् ।
अथवा देवदेवेशि यदेकान्ते चतुष्पथम् ॥ ७३ ॥
तत्समीपे लिखेच्चक्रं सिन्दूरेण महाप्रभम् ।
सर्वाद्यात आरभ्य यावन्मध्यं महेश्वरि ॥ ७४ ॥

---

दिगन्तरालेषु आग्नेयादिषु । पूजितं चक्रम् । दुग्धमध्ये क्षीरमध्ये । ज्वलनो वह्निः ॥ ६७–७३ ॥

एकान्ते विजने । तत्समीप इत्यत्र तच्छब्दश्चतुष्पथं लक्षयति । महाप्रभम् अत्युज्ज्वलम् । सर्वाद्यात इत्यस्यायमर्थः—पूज्येऽस्मिन् महति चक्रे [2]यद्यदणिमादिसिद्ध्यादीना महात्रिपुरसुन्दर्यन्ताना देवताना पूजास्थानमस्ति,

---

स्यायमर्थः—[1]ईशानादिवायव्यान्तं विदिङ्मुखस्तत्तद्द्रव्यैस्तत्तत्कर्मवन्नामसहितं चक्रं पूजयेदित्यर्थः । रोचनालिखितमित्यादि । अत्रापि वशीकरणकर्मवत् सर्वं नामादि । क्षिप्तमित्यादेरुच्चाटनकर्मवत् सर्वम् । (चक्र?तक्र)मध्यगतमित्यादेर्विद्वेषणकर्मवन्नामादिलेखनम् । ज्वलज्ज्वलनमित्यादेर्मारणकर्मवत् सर्वं लोहपट्टे समुत्कीर्य त्रिकटुकचित्रमूलविषादिपङ्केनालिप्याधोमुखमग्नौ निक्षिपेदिति यावत् ॥ ६७–७३ ॥

अथवेत्यारभ्य खेचरी भवेदित्यन्तस्यायमर्थः—[2]चक्रचतुरस्रमारभ्य त्रिकोणमध्यपर्यन्तं प्रतिदैवतमासनस्थानेष्वकारादिक्षकारान्तं वांगुराकारं यथा भवति तथा लिखे-

---

१ तां–ब. । २ रीम्–ब । ३ एष श्लोकोऽधिकः–चाङ्क ख ग से. सङ्क. । ४. मे–सङ्क ग । ५ सर्वं–ब । ६ मुरे–सङ्क ख । ७. सूचयन्ति–ख. ङ. । ८. मादिशक्तिसि–ख. ङ., मादिमहासि–ग. । ९. 'देवताना' नास्ति–ख. ङ. । १०. वाग्भव कामराज–ख. ङ. ज. ।

1. "तेन पूर्वोत्तरापरदक्षिणक्रमस्य पूर्वं क्लृप्तत्वादीशानाद्याग्नेयान्त क्रम इति कल्पना परास्ता । ईशानादिवायव्यान्त क्रम इति रत्नावलीकारस्य तु महान् प्रमाद" (से. पृ १२२) ।
2. अणिमाया स्थाने स्वाभिमुखाग्र कोण इत्येशानाग्नेयाभिमुख्येन द्वे वामदक्षिणरेखे विन्यस्य

**अकारादिक्षकारान्तां मातृकां तत्र विन्यसेत् ।**
**पूजयेद्[1] रात्रिसमये कुलाचारक्रमेण यः[2] ॥ ७६ ॥**
**तत्क्षणात्[3] स[4] महेशानि[5] साधकः खेचरो भवेत् ।**

---

तत्र[6] तत्राकारादिक्षकारान्ता मातृकामकथादित्रिरेखात्मना[7] मध्यस्थहक्षेण च त्रिकोणरूपकुलासनात्मना विन्यस्य पूजयेदिति । ननु देवता कुत्र निवसन्ति ? मन्त्रेष्विति ब्रूम । यच्छ्रुतिः—"क्व स्थ क्व व सद्यो हव्य वक्ष्याम इति छन्द स्वित्यब्रुवन् । गायत्र्या त्रिष्टुभि जगत्यामिति । तस्माच्छन्दस्सु सद्ध्य आदित्येभ्य आङ्गीरसी प्रजा हव्य वहन्ति" ( तै० ब्रा० २।२।३।७ ) इति । आह च—[1]"मणिवन्मन्त्रमालम्ब्य प्रभावन्मन्त्रदेवता " इति । रात्रिसमये अर्धयामिन्याम् । यदागमः—"पूजोदितार्धयामिन्या पितृवेश्मादिशायिनाम्" इति । कुलाचारक्रमेण महासमयमहानुष्ठानमार्गेण ॥ ७३–७६ ॥

---

वित्येतत् । अयमर्थः[11]—प्रविदैवतमासन[12] कुलासनवाग्भवं[13] कृत्वेति मन्तव्यम् । तदुक्त श्रीसिद्धनाथपादै —

बीज गुह्ये न्यसेदाद्यमकथादित्रिपङ्क्तिकोम्[14] ।
शेप बीजद्वय कन्दमित्येतत्कौलमासनम् ॥ इति ।

अत्र[15] बीजद्वयमिति क्षकारहकाराविति भाव[16] ॥ ७३–७६ ॥

---

१ मात्र–ख । २ तु–सक ख । ३ तत क्षणात्–सक, ततश्च–सग । ४. सा–सग । ५ महादेवि–सग । ६ 'तत्र' नास्ति–ख, ङ । ७ रेखात्मक–ख, ङ. । ८. सन्तीति–ख, ङ । ९. यथा–ख. । १०. गणेत्य वय –ख. ङ. । ११. 'अयमर्थ' नास्ति–क. ग. छ. । १२. देवता–ग ङ. ज । १३. 'कुलासनवाग्भव' नास्ति–क. ग. छ. । १४. क्तिश– ष. ग. छ. । १५. 'अत्र बीजद्वयमिति' नास्ति–क. ग [illegible] । १६ यावत–क. ग छ. ।

मध्यबिन्दोरुपरि यथा तिर्यग्रेखा पतति तथा पूर्वरेखा विभाव्य तासा स्थानेऽकथादिषोडश षोडशमातृका विलिख्य कोणत्रये हलक्षांल्लिखेदिति केचित । अणिमाद्यखिलदेवतानामासन स्थाने प्रत्येक वागुराकारेण सर्वमातृका पुन पुनर्लेख्या इत्यन्ये' ( से. [illegible] १२२ ) ।

1 ' मन्त्र मणिवदालम्ब्य प्रभाव मन्त्रदेवताम् । जपध्यानादिक कुर्यान्न तादस्थ्येन कुत्रचित ॥" इत्येव क्षेमराजेन स्वच्छन्दोद्योते ( भा १, प २, पृ ७८ ) उद्धृत श्लोक ।

पूजयित्वा महेशानि तद्वदेकतरो गिरौ ॥ ७६ ॥
अजरामरतां सम्यग् लभते नात्र संशयः ।
महाभूतदिने वापि श्मशाने यदि पूजयेत् ॥ ७७ ॥
पूर्ववन्निशि देवेशि साधकः स्थिरमानसः ।
पादुकाखड्गवेतालसिद्धद्रव्यमहोदयाः ॥ ७८ ॥

---

तद्वत् खेचरताप्राप्त्याराधनक्रमवत् । [1]एकतरः असहायः । गिरौ पर्वते ॥ ७६ ॥

महाभूतदिने [2]कृष्णचतुर्दश्याम् । स्थिरमानसः निर्विचिकित्सः । पादुका पादुकासिद्धिः, सा च वह्निसलिलादिषु यात्रा । [3]इदं तु लेपादिना विना मन्त्रसिद्धचैवेत्यर्थः । खड्गः खड्गसिद्धिः । सा च स्वयंप्रहर्तृता । वेतालो वेतालसिद्धिः । सा च पिशाचादिपरिकरवत्ता । सिद्धद्रव्यम् अप्रयत्नसम्पन्न-पायसापूपादिसिद्धिः । महोदयः अणिमादिविभूतिविशेषः । अञ्जनम् अञ्जन-सिद्धिः । विवरं बिलद्वारलोकान्तरसिद्धिः । चेटी दासीसिद्धिः । यक्षी भोग-योग्यविशिष्टालङ्कारभूषितदिव्यपुरन्ध्रीसिद्धिः । दूरगतिः दूराध्वगमनम् । अयमर्थः—चित्सारपरमार्थाया देवतायाः सर्वगतत्वात् साधकोत्तमस्य

---

पूजयित्वेत्यादि स्पष्टार्थः । प्रयोगस्त्वयमेव । स्थाने विशेष इति विशेषः ॥७६-७७॥ महाभूतदिनमिति [2]कृष्णाङ्गारचतुर्दशी । सिद्धद्रव्यं रसायनादि । मनश्शिला स्पर्श-

१. पुजयेद्रात्रिसमये—सक. । २ महादेवि—वाक. ल. सव. । ३. तरो—वाग. से. सक. ल. ग । ४. सत्य—वाग. से. । ५. धापि—सल. ग. । ६. कव्यमन शिलाः—वाक. ग., द्रव्यं मन शिला—अ. । ७. 'क्रमवत्' नास्ति—ख. ङ. । ८. 'पादुका' नास्ति—ग. घ. । ९. पिशाचपरि—ख. ङ. । १० सिद्धिदम्—घ. । ११. सा च निधिसिद्धिः—ग. । १२. विवद्द्वारं—ग. । १३. 'अयमर्थ.' नास्ति—ख. ङ. । १४. स्थानतिथिविशेष एव विशेष—ख. ङ., स्थानविशेष-तिथिविशेष—ज. । १५. द्रव्यमिति—ख. ङ. ज. । १६. स्वर्ण—ख. ।

1. "एकतर इति पाठ स्त्वोऽत्यासहाय इति व्याख्यानमर्थवादितन्त्रान्तरविरुद्धम्" (से.पृ. १२३)।
2. महाभूतदिनं चतुर्दशी । साऽपि कृष्णेवेति केचित् । साऽपि भौमयुक्तैवेत्यपरे" (से.पृ. १२३)।
3. सामान्ये नपुंसकम् । इव पूर्वोक्तयात्रप्रनिपाद्यं पादुकासिद्धिजन्य वह्निसलिलादिषु यात्रारूपं प्रयोजनमत्र लेपादिना विना मन्त्रसिद्धिमात्रेणैव फलतीति यावत् ।

अञ्जनं विवरं[1] चेटी[2] यक्षी[3] दूरगतिस्तथा।
यत्किञ्चित्सिद्धिसन्तानं[4] विद्यते[5] भुवनत्रये ॥ ७९ ॥
तत्सर्वमेव सहसा साधयेत् साधकोत्तमः।

इति श्रीनित्याषोडशिकार्णवे द्वितीयः पटलः ॥

—:०:—

देवतात्मत्वेन विश्रान्तेर्यस्मिन् देशे गमनसंकल्पः समुन्मिषितस्तस्य दे(व?श)स्य सदैव पुरःस्थितत्वादुचितैवोक्तिरिति।

मायूरपित्तकृ[6]कवाकुवसेन्द्रकोपकारञ्जबीजतुप[7]गुग्गुलिकां कटिस्थाम्।
हेमावृतां वहति यः स तु योजनानां सद्यः शतं व्रजति पक्षिपतिर्दिवीव ॥

इत्यभियुक्तोक्त्या गुलिकादिसिद्धया[8] दूराध्वगमनम्, इह[9] तु विद्यासिद्धया। सिद्धिसन्तानं सिद्धिनिचयः। सहसा "सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन" इति स्थित्या यद्यन्मनसा संकल्पयेत् तत्तत्सर्वमभि[10]सन्ध्यव्यवधानेन[11] संपादयेदिति शिवम् ॥ ७७–७९½ ॥

एवमृजुविमर्शिन्यां नित्याषोडशिकार्णवे।
शिवानन्दपरामृष्टो[12] द्वितीयः पटलो गतः ॥

—:०:—

शिला। चेटी दासीजनः[13] ॥ ७७–७९½ ॥

इति श्रीविद्यानन्द[14]विरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां
प्रयोगविधि[15]र्द्वितीयः पटलः ॥

—:०:—

१. चिम्बुकं–सख.। २. चैव–ग्राक. ल.। ३. चेटकं यक्षिणीं तथा–थाक. ल., चेटकं चैव यक्षिणीम्–सक., चेटिकां–सग.। ४. द्रुसमयं–सक., सिद्धनिचयो–सख. ग., निचयं–थाक. ल.। ५. वर्तते–सक.। ६. कृकलास–ख.। ७. तुपतोयकोलि–ग. घ.। ८. 'गुलिकादिसिद्धया' नास्ति–ख.। ९. 'इह तु…सिद्धिनिचयः' नास्ति–ख.। १०. मपि–ख. ङ.। ११. सानेन–ग.। १२. मृष्टं द्वितीयं पटलं गतम्–ख. ङ.। १३. इतः परम्–'इति प्रयोगविधिः' इत्यधिकः पाठः–क. ख. छ.। १४. नन्दनाथ–ख. ङ. ज.। १५. 'प्रयोगविधिः' नास्ति–ख. ङ. ज.।

# अथ तृतीयः पटलः

देव्युवाच

भगवंस्त्रिपुरामुद्राः सूचिता न प्रकाशिताः ।
कथं विरचनं तासां क्रियते वद शङ्कर ॥ १ ॥

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।
याभिर्विरचिताभिस्तु संमुखा त्रिपुरा भवेत् ॥ २ ॥

---

एवमनल्पप्रयोगशरीरं द्वितीयं पटलं व्याख्यायेदानीमष्टाविंशतिसूत्र[3]-सन्दर्भस्य देवतासान्निध्यकरमुद्राविन्यासप्रतिपादकस्य तृतीयस्य[4] पटलस्य व्याख्या[5] लिख्यते—श्रीदेव्युवाचेत्यादि[6] । त्रिपुरामुद्राः त्रिपुराम्बासम्बन्धिन्यो[7] मुद्राः । मुद्रानाम काश्चन शक्तयः । उक्तं च[8]—

मोचयन्ति ग्रहादिभ्यः पाशौघं[9] द्रावयन्ति च ।
मोचनं द्रावणं यस्मान्मुद्रास्ताः शक्तयो[10] मताः ॥ इति ।

अभियुक्तोक्तिरपि[11]—

द्रावणात् पाशजालस्य तत्परस्य च मोचनात्[12] ।
मुद्रापीठमिति प्रोक्तं कामरूपं नमाम्यहम् ॥ (सं. प.) इति ।

---

अथ तृतीये[13] पटले सर्वानुवादि टिप्पणं लिख्यते । श्रीदेव्युवाचेत्यादि भवेदित्यन्तस्य[14] स्पष्टोऽर्थः ॥ १-२ ॥

---

१. भैरव-सग., शङ्कर-सघ. । २. सो-सग घ., सान्निध्यं त्रैपुर-सग. । ३. सूत्रस्य-स. । ४. 'तृतीयस्य पटलस्य' नास्ति-ग. । ५. विवृतिरुच्यते-स. । ६. भगवन्नित्यादि-ख । ७. त्रिपुरायाः-ग. घ. । ८. 'उक्तं च' नास्ति-ग. ङ । ९. पाशौघान्-चि. । १०. शक्तयः स्मृताः-स. ङ., परिकीर्तिताः-चि. । ११. अभियुक्तैरपि-स. घ. । १२. मोदनात्-ग. घ. । १३. यप-ख. ग. ङ. छ. । १४. त्यन्त स्पष्टार्थ-ङ. ज. ।

परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ ३ ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डैषा महामुद्रा त्रिपुराह्वानकर्मणि ॥ ४ ॥

सूचिताः "संक्षोभ" ( १।१८४ ) इत्यनेन । विरचनं बन्धः । तासां मुद्राणाम् । याभिः मुद्राभिः । संमुखा त्रिपुरा भवेदित्यस्यायमर्थः—मुद्राविरचने कृते साधकं प्रसन्नदृशा पश्यतीति ॥ १–२ ॥

परिवर्त्येतिद्वयं त्रिखण्डामुद्राप्रतिपादनपरम् । परिवर्त्य परस्परं क्षिप्ताङ्गुली कृत्वा । स्पृष्टौ इतराङ्गुलिभ्योऽविविक्तो । समौ अन्योन्यम् । अनामान्तर्गते अनामाभ्यामन्तर्गते । कुटिलाकृती कुटिलाकारे । त्रिपुराह्वानकर्मणि, प्रयोक्तव्येति शेषः । अयमर्थः—प्रथममात्मीयौ हस्तौ परिवर्त्याङ्गुष्ठौ परस्परश्लिष्टौ कृत्वाऽनन्तरं समोच्छ्रितमध्यमाङ्गुलिद्वयोभयपार्श्वे व्यत्यासेनान्तर्गतानामिके तर्जन्यौ कुटिलाकारे विधाय पुनः कनिष्ठिके समे निजस्थाने नियुञ्ज्यादितीयमावाहनमुद्रा त्रिखण्डाख्या ॥ ३–४ ॥

परिवर्त्य कराविति । हस्तावन्योन्यं यथा स्पृष्टाङ्गुली भवतस्तथा कृत्वेत्यर्थः । अङ्गुष्ठौ कारयेत् समाविति । उभयकरज्येष्ठाङ्गुलिद्वयं सम कुर्यादिति । परस्परस्पृष्टौ दण्डाकारौ यथा भवतस्तथा कर्तव्यमिति यावत् । अनामान्तर्गते कृत्वेति । उभयकरानामाङ्गुलिद्वयमधः कुर्यादिति यावत् । कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरीति । कनिष्ठिकाङ्गुली पूर्वं यथा स्थिते तथैव कुर्यात्, न त्वन्तर्गते इति यावत् । तर्जन्यौ कुटिलाकृती इति । तर्जनीद्वयं कुटिलाकृती कुर्यात् । अप्रतिषिद्धमनुमतमिति न्यायेन मध्यमाङ्गुलिद्वयं यथास्थितमेव कुर्यात्, न त्वन्तर्गतमिति । त्रिखण्डैषा महामुद्रा त्रिपुराह्वानकर्मणीति । इयं रचिता मुद्रा त्रिखण्डासंज्ञा त्रिपुराह्वानकर्मणि नियुक्तेत्यर्थः ॥ ३–४ ॥

१. स्पृष्टा–याग. से. ब., कृत्वा–साप. । २. मुरे–राग. । ३. चेय–याग. अ. से. ध. सक. ग. प. । ४. स्थान–राग. ध । ५. स्पृष्टौ–स. ग. घ. । ६. 'अन्योन्यम्' नास्ति–प. । ७. श्लिष्टौ समौ स्पष्टौ कृत्वा–रा. ट., स्पृष्टौ–प. । ८. नितरां–ट. । ९. कृत्वेति–रा. ट. ज. । १०. 'इति यावत्' नास्ति–प. । ११. इय मिय –स. । १२. 'यावत्' नास्ति–ट. ज. । १३. स्थित तथा–स. ट., 'एव' नास्ति–ज. । १४. संज्ञिता–रा. ट. ज. ।

1. अन्योन्यं समावित्यर्थः । आवरणस्यपूरणाभिप्रेतौ व्याख्यानद्वौ स्पष्टान्तरेऽन्ययन्नोपपने ।
2. "अनामान्तर्गते इत्यत्र बहुव्रीहिः । अनामाभ्यामन्तर्गते इत्यपि केचित्" ( से. पृ. १२५ ) ।

मध्यमे[१] मध्यगे कृत्वा कनिष्ठाऽङ्गुष्ठरोपिते[२]।
तर्जन्यौ[३] दण्डवत् कृत्वा[४] मध्यमोपर्यनामिके[५] ॥ ५ ॥
एषा तु[६] प्रथमा मुद्रा सर्वसंक्षोभकारिणी[७]।
एतस्या एव मुद्राया मध्यमे सरले यदा[८] ॥ ६ ॥

---

मध्यमे[९] मध्यगे कृत्वेति । मध्यमे मध्यमाङ्गुली । मध्यगे मध्यस्थाने गते, [1]यथास्थानस्थिते कृत्वेत्यर्थ. । कनिष्ठाङ्गुष्ठरोपिते । इदं[१०] मनामिके इत्यस्य विशेषणम् । कनिष्ठिकाङ्गुष्ठचतु[११]ष्टयरोपिते इत्यर्थ । दण्डवत्कृत्वा दण्डाकारेणाभिप्रसार्य । मध्यमोपरि मध्यमयोरुपरि । प्रथमा दर्शनीयासु मुद्रासु मध्ये । निखण्डा मुद्रा[१२] पूर्वोक्ता त्रिपुराह्वानकर्मणि विनियुक्ता । अयमर्थ —प्रथममुत्तानौ हस्तौ विधाय तर्जन्यौ[१३] दण्डवदितराङ्गुलिभ्यो विश्लिष्टं[१४] प्रसार्य कनिष्ठाङ्गुष्ठरोपिते अनामिके परस्पराश्लिष्टे[१५] यथास्थानस्थितमध्यमोपरि कुर्यादितीयं प्रथमा सक्षोभिणी मुद्रा ॥ ५–६ ॥

---

मध्यमे मध्यगे कृत्वेत्यारभ्य सर्वसक्षोभकारिणीत्यन्तस्य[१६] व्याख्या लिख्यते—मध्यमे मध्यगे कृत्वेति मध्यमाङ्गुलिद्वयं मध्यगं[१७] कृत्वा, मध्यस्थितं करोतीति यावत् । मध्यमोपर्यनामिके इति कनिष्ठाङ्गुष्ठरोपिते[१८] अनामिके मध्यमाङ्गुल्योरुपरि कारयेत् । तर्जन्यौ दण्डवत् कुर्यात् । एषा तु प्रथमा मुद्रा सर्वसक्षोभकारिणीति । रचितैषा मुद्राणा प्रथमा सर्वसंक्षोभकारिणीति सज्ञा ॥ ५–६ ॥

---

१. मा–वाप. ल., गा–वाग. । २. कनिष्ठे–वाक ल. । ३. गोपिते–च. । ४. कुर्यात्–अ. । ५ मिका–वाप. ग. । ६. सक्षोभिणी–सक. । ७. रिका–ब. । ८. यदि–वास. से. । ९ 'मध्यमे मध्यगे कृत्वेति' नास्ति–ख ङ. । १०. 'इद रोपिते इत्यर्थ' नास्ति–ग. । ११. 'चतुष्टय' नास्ति–ख. ग ङ. । १२. 'मुद्रा' नास्ति–ख. ग. ङ. । १३. 'तर्जन्यौ' नास्ति–ख. । १४. विशिष्ट–ङ. । १५. श्लिष्ट–ग. घ. । १६. स्यायमर्थ –ख. ङ. ज. । १७. मध्यगे कृत्वेति यावत्–ख. ङ. ज. । १८. कनिष्ठाङ्गुष्ठयोरपि अ–न्त ङ. ल. ।

1. "प्राञ्चस्तु मध्यमे मध्यगे एव न तु स्थानान्तरगते कुर्यात् । निजस्थान एव ते यसन इति यावत् । कनिष्ठाङ्गुष्ठरोपिते इत्यनामिकाविशेषणम् । तर्जन्यौ मध्यमोपरि दण्डवत् कुर्यादिति व्याचख्यत" ( ग. पृ. १२५–१२६ ) ।

